# पञ्चरात्रसंहितासु ज्ञानपादसमीक्षणम्

A Study of the Jñānapāda of the Pañcarātra Samhitās

प्रो. लक्ष्मीनरसिंहभट्टः
साहित्यविभागाध्यक्षः
राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपतिः

देवराजप्रकाशनम्, तिरुपतिः
1998



The book is published with the financial assistance of
**TIRUMALA TIRUPATI DEVASTHANAMS**
under their scheme "Aid to publish Religious books"

A Study of the Jñānapāda of the Pañcarātra Samhitas

First Edition : 1998

Copies . 1000

Price Rs 100/-

FOR COPIES
Smt. AMBUJAVALLI
152, T. Nagar,
TIRUPATI - 517 507

Laser Typesetted and Printed at
ANNAPURNA GRAPHICS
53, Upstairs, R.S Gardens
TIRUPATI - 517 50? (A.P.) ✆ : 53?84

मातापितृभ्यां कमलाम्बादेवराजभट्टाभ्याम् ।
ज्ञानसमीक्षणमेतत् साञ्जलि संदीयते परप्रीत्या ॥

# प्रस्तावना

Prof. S.B. RAGHUNATHACHARYA
*Vice-Chancellor*
R S. Vidyapeetha, TIRUPATI

आगमशब्दस्य तेदवाचकत्वेऽपि उपनिषत्प्रतिपाद्यस्य प्रवृत्तिरूपस्य उपासनाख्यस्य धर्मस्य आलम्बनत्वेनात्यन्तापेक्षितदेवालयार्चनादि-प्रतिपादकग्रन्थराशिमप्यभिधत्ते रूढ्या इति नैतदतिरोहितं विदुषाम् । वेदाविरोधिनामागमानां प्रामाण्यं सुस्थिरमिति विदन्त्येव विपश्चितः ।

श्रुत्यर्थानुगामिषु आराध्यदेवताभेदेन बहुविधेष्वागमेषु पाञ्चरात्रं गभीरतमम् । लोकानुद्धर्तुं भगवान् नारायण एव कृत्स्नं पाञ्चरात्रशास्त्रं प्रववृते । भागवत-सात्त्वत-एकायन-भगवच्छास्त्रशब्दैः व्यवह्रियमाणे पाञ्चरात्रशास्त्रे ज्ञान-योग-क्रिया-चर्या पादैश्चतुर्भिः सुविस्तीर्णं शास्त्रप्रमेयं समस्तमपि विवृतम् । पाञ्चरात्रे तत्त्वनिर्णयपरः उपायफलयोः निर्णायकश्च भागः ज्ञानपाद इति, ध्यानप्रकारविवेचनपरो भागः योगपाद इति, आलय-भगवद्बिम्बानां निर्माणपूर्वकं प्रतिष्ठादेश्च विवरणपरो भागः क्रियापाद इति नित्यनैमित्तिककाम्योत्सवादीना विवरणपरो भागः चर्यापाद इति च पारिभाषिकैः शब्दैः व्यवह्रियते ।

मोक्षैकफललक्षणे पञ्चरात्रशास्त्रे सन्ति परःशताः संहिताग्रन्थाः । संस्कृतसाहित्येतिहासलेखकानां बहूनामज्ञाते पाञ्चरात्रशास्त्रेऽस्मिन् शास्त्रान्तरापेक्षया विरलतरा व्यवसायिन इति नापरोक्षं विद्वत्तल्लजानाम् । एतादृशे

व्यतिकरे वंशपरम्पराप्राप्तपाञ्चरात्रागमवैदुषीविभासुरै , साहित्यपाथोनिधिपारदृश्वभि आचार्यैः श्री लक्ष्मीनरसिंहभट्टमहोदयै· ''पाञ्चरात्रसंहितासु ज्ञानपादसमीक्षणम्'' इति संज्ञया त्रिभिरध्यायैः महता परिश्रमेण संदृब्धोऽसौ ग्रन्थः विदुषां चेतांस्यावर्जयतीत्यत्र नास्ति संशीतिलेश· ।

वैष्णवागमानां परिचयरूपे प्रथमे अध्याये भगवता नारायणेन प्रोक्तस्य अत एव भगवच्छास्त्रमित्यभिधीयमानस्य पाञ्चरात्रस्य अप्रमाणत्वसाधकवदाभासमानानां हेतूनां प्रतिसमाधानपूर्वकं पाञ्चरात्रप्रामाण्य सम्यगुपापादि । पाञ्चरात्रमिदं श्रुतिमूलकमिति विशिष्य चैकायनश्रुत्युपबृंहितमिति च सहेतुकं न्यरूपि । वैखानसागमप्रामाण्यम्, वैखानसागमग्रन्थसंख्या, पाञ्चरात्रस्य प्राचीनता, पाञ्चरात्रशब्दनिर्वचनम्, पाञ्चरात्रसंहितासंख्या, आगमादिभेदेन पाञ्चरात्रचातुर्विध्यं चात्र विशदमदर्शि।

द्वितीये अध्याये पाञ्चरात्रगतानां ज्ञान-योग-क्रिया-चर्या-पदानां प्रतिपाद्यस्वरूपं सम्यक् प्रादर्शि।

तृतीयाध्यायः प्रबन्धस्यास्य महद्वैशिष्ट्यमावहति । अत्र शास्त्रैकसमधिगम्यं परमात्मादिव्यपदेश्यं तत्त्वम्, भगवतः पर-व्यूहादीनि पञ्च रूपाणि, भगवतः ज्ञानादयो षड्गुणा·, विष्णुशक्तिः, विष्णुशक्तेः षट् कोशा·, जीवात्मस्वरूपम्, प्रलयः, सृष्टि·, मोक्षस्वरूपम् तदुपाय इत्यादयो विषया· सप्रमाणमिह ग्रन्थे प्रतिपादिताः ।

श्री भट्टमहोदयानां प्रणालीबन्धकौशलं, आगमशास्त्रीयं तलस्पर्शि पाण्डित्यं चात्र शोधप्रबन्धे प्रतिपदमस्माभि· साक्षात्क्रियते। आगमज्ञेष्वपि परिचितचर्यापादप्रमेयाः बहवः, ततोऽपि न्यूनसंख्याकाः योगपाद-क्रियापादकुशलाः, ज्ञानपादनिष्णातास्तु विरलविरला इत्यनुभव आस्माकीनः। एवंस्थिते वस्तुनि पाञ्चरात्रसंहितासु ज्ञानपादस्थानां तत्त्वानां समीक्षणं हि दुस्साधमित्युक्तिर्नात्युक्तिकोटिमाटीकते। बहुक्लेशसाध्येऽस्मिन् प्रयत्ने समसाधि पुष्कलं फलमाचार्यवर्यैः श्रीलक्ष्मीनरसिंहभट्टैरिति सानन्दमभिनन्दामो वयम्।

*एकायनोपदिष्टस्य ज्ञानतत्त्वस्य शोधकम्।*
*समिन्धां भट्टसंदृब्धं ज्ञानपादसमीक्षणम्॥*

इत्थम्

बहुधान्य-पञ्चमीतीर्थोत्सव· विदुषामाश्रवः

24-11-1998 **रघुनाथाचार्यः**



# संस्तवः

*महामहोपाध्यायः*

**प्रो. यन्. यस्. रामानुजताताचार्यः**

कुलपतिचरः

राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपतिः

संस्कृतवाङ्मये आगमनाम्ना प्रथिताः ग्रन्थाः सन्ति बहवः। वैष्णवशैवशाक्तादिभेदेन तत्तद्देवताप्राधान्येन भिन्नप्रस्थानास्ते भवन्ति। वैष्णवागमाश्च वैखानसपाञ्चरात्रभेदेन द्विप्रकाराः प्रथन्ते। उक्तविधा आगमाः वेदप्रामाण्यमभ्युपगम्य प्रवृत्ताः। अत इमे वैदिका आगमाः। बौद्धादीनामागमाः अवैदिकाः। वैदिका आगमाः तन्त्रशब्देनापि व्यपदिश्यन्ते। वैष्णवागमाः विष्णुपारम्यं विष्णुपूजादिकं च प्रतिपादयन्ति। शैवागमाः शिवपारम्यं शिवपूजादिकं च प्रतिपादयन्ति।

वैखानसपूजादौ वैखानससूत्रिणां द्विजानामेवाधिकारः, नान्यसूत्रिणां, नाप्यद्विजानाम्। पाञ्चरात्रपूजादौ तु स्वार्थे गृहार्चायजने सर्वेषामधिकारः। परार्थे देवालयपूजादौ तु वंशपरम्परया दीक्षाविशेषपुरस्सरं समाराधनेऽधिकृतानामेव मुख्योऽधिकारः, अन्येषां तु गौणः। उभयेषामपि दीक्षाविशेषोऽवर्जनीयः।

तत्र शैवानां शाक्तानां चागमानां प्रामाण्यविषये विवादसद्भावेऽपि वैष्णवानामागमानां प्रामाण्यविषये न कस्यापि विवाद इति ब्रह्मसूत्रतद्भाष्य-महाभारतादितः स्पष्टमवगम्यते। निरूपितं चैतत् पाञ्चरात्रपारम्य-भूमिकायामस्माभिः। पाञ्चरात्रशब्दार्थविषये पाञ्चरात्रागमविभागविषये च विवेचनमन्यैः प्रकृतग्रन्थकारैश्च कृतमिति नेह प्रस्तूयते।

पाञ्चरात्रशास्त्रग्रन्थाः संहिता इति उपनिषद इति तन्त्राणीति च व्यवह्रियन्ते। तत्र केचन विस्तृताः पाद्मसंहितादयः ज्ञान-योग-क्रिया-चर्याख्यपादैश्चतुष्पादा भवन्ति। संक्षिप्तास्तु ग्रन्थाः पादविभागमन्तरैव तद्गतानर्थान् प्रतिपादयन्ति। तत्र ज्ञानपादे वासुदेवादिचतुर्व्यूहानां व्यूहान्तरादीनां च स्वरूपं तेषां व्यापारः महिमेत्यादयः, योगपादे तेषामुपासनप्रकाराः, क्रियापादे तेषामेवालयार्चाविग्रहादिनिर्माणप्रकाराः, चर्यापादे तेषामाराधनविधयश्च प्रतिपाद्यन्ते।

''पाञ्चरात्रसंहितासु ज्ञानपादसमीक्षणम्'' इति नाम्ना श्रीलक्ष्मीनृसिंहभट्टमहोदयैः कृतः ग्रन्थः अपेक्षितसकलविषयावगमकः नानासंहितादिग्रन्थानां परिशीलनस्य फलभूतः अनुसन्धानमार्गनिष्णातानामन्येषां च विदुषां चेतांसि आवर्जयति।

अध्यायत्रयात्मना संदृब्धोऽयं ग्रन्थः। प्रथमोऽध्यायः वैष्णवागमानां परिचयं ददाति। तत्र आगमस्य प्रामाण्यम्, आगमस्य आत्मोन्नतिसाधकत्वम्, आगमप्रतिपाद्यविग्रहाराधनस्य श्रुत्यादिसंमतत्वम्, आगमभेदाः, वैखानसागमस्य विष्णुपारम्यबोधकत्वम्, वैखानसागमप्रामाण्यम्, वैखानसागमग्रन्थसंख्या, पाञ्चरात्रप्रामाण्यम्, पाञ्चरात्रस्य प्राचीनता, पाञ्चरात्रशब्दनिर्वचनम्, पाञ्चरात्रे चतुर्विधसिद्धान्ताः, पाञ्चरात्रागमग्रन्थसंख्या इत्येते विषयाः बहुप्रमाणवचनप्रदर्शनपूर्वकं निरणीयन्त।

द्वितीयेऽध्याये पाञ्चरात्रगतानां ज्ञानपादयोगपादक्रियापादचर्यापादानां प्रतिपाद्यस्वरूपं सम्यक् प्रादर्शि।

तृतीयेऽध्याये प्रबन्धस्यास्य जीवातुभूत ज्ञानपाद· सम्यक् समीक्षितः। तत्र ज्ञानपादे तत्र तत्र संहितासु विप्रकीर्णतया प्रतिपादितं परमात्मनः स्वरूपम्, परमात्मपरतया निर्दिष्टानां शब्दानां श्रुतिस्मृत्याद्यनुगामित्वम्, तेषां शब्दानामर्थवैशिष्ट्यम्, भगवत परव्यूहविभवान्तर्याम्यर्चारूपाणि, भगवतः ज्ञानशक्तिबलैश्वर्यवीर्यतेजोरूपाः षड्गुणाः, विष्णुशक्तिः, तस्याः सृष्टिस्थितिसंहारतिरोभावानुग्रहरूपाणि पञ्च कर्माणि, विष्णुशक्तेः षट् कोशाः, जीवात्मस्वरूपम्, प्रकृत्यादिचतुर्विंशतितत्त्वानि, प्रकृतिपरमपुरुषयो· संबन्धः, प्रपञ्चसृष्ट्यादिकम्, मोक्षस्वरूपम्, तदुपायः इत्यादयोः विषयाः पाञ्चरात्रसंहिताग्रन्थेभ्यः संकलय्य तदुक्तप्रकारेणैव निरणायिषत।

''नामूलं लिख्यते किंचिन्नानपेक्षितमुच्यते'' इति वचनमनुसृत्य सावधानं लिखितोऽयं प्रबन्ध· नातिविस्तृत· नातिसंक्षिप्तः उपलभ्यमानमुद्रितामुद्रितसकलवैखानसपाञ्चरात्रागमग्रन्थस्पृक् सुबोधस्पष्टशैलीरमणीयः पाञ्चरात्रसंहितानिहितज्ञानपादादिप्रतिपाद्यार्थ-जिज्ञासूनामत्यन्तमुपकारकः इत्यत्र न कोऽपि संशयीत।

एतादृशोत्तमग्रन्थनिर्माणेन पुण्यातिशयं प्राप्तवन्त इमे लक्ष्मीनृसिंहभट्टमहोदयाः आगमप्रतिपाद्यस्य श्रीमतो नारायणस्य प्रसादेन उत्तरोत्तरज्ञानसंपदा तत्फलभूतग्रन्थनिर्माणसंपदा चान्विताः विद्वज्जनसबहुमानावलोकनपात्रभूताः आयुरारोग्यादिसंपन्नाः विभ्राजन्ताम् इत्याशासे।

एन्.एस्. रामानुजताताचार्यः



# FOREWORD

Prof. M. NARASIMHACHARY
Prof & Head
Dept of Vaishnavism
University of Madras
MADRAS - 600 005

It gives me immeasurable pleasure in writing this Foreword to the book entitled "A Study of the Jñānapāda of the Pāñcarātra Samhitās" (in Sanskrit) authored by Prof Lakshmi Narasimha Bhatta which earned him the Degree "Vidyāvāridhi" of the Rashtriya Sanskrit Vidyapeetha, Tirupati

Ever since the German savant, Dr. F O Schrader wrote his illuminating book "Introduction to Pāñcarātra and the Ahirbudhnya Saṁhita", many Indologists - both from the East and the West - turned their attention to the virgin field of Pañcarātra The contributions of scholars like Dr V Varadachari, Dr. H Daniel Smith and Dr Sanjukto are indeed quite significant and many younger scholars are evincing great interest in this almost neglected field of study. Many scholars are independently pursuing studies in the Pāñcarātra and Vaikhānasa Āgamas of whom Dr Sylvia Stark and Dr. Colas deserve special mention

The thrust of the Āgamas is mainly in the sphere of festivals (*utsavas*) in all their detail The practice of image-worship which had its beginning in the dim pre-christian era has become the very foundation of the Āgama literature The Śrīvaisnava devotees equate the images of the Lord with the *Vibhava* manifestations of the Lord, and call them the *arcāvatāras* Śrī Pillai Lokācārya, explaining the relative "availability" of the Lord's five aspects viz the *Para*, *Vyūha*, *Vibhava*, *Antaryāmin* and *Arcā* for the worship by the devout, makes an outstanding statement in his *Śrīvacanabhūsanam*

"Āavaranajalam pōlê Paratvam, Pārkadal Pōlê Vyūhangal, Perukkāru pōlê Vibhavangal, Bhūgatam jalam pōlê Antaryāmitvam; Athilē tēngiya madukkal pōlê Arcāvatāram"

"The Para-aspect of the Lord is like the sheet of water encompassing the cosmic egg. The Vyūha-aspect is similar to the Milky Ocean. The Vibhava-aspect is comparable to the flash floods. The Antaryāmin-aspect is like the sub-soil water. The Arcāvatāra is, however, similar to the pools of water that can be scooped(by anybody with ease) in a river-bed(or a sea-shore)".

The festivals (*Utsavas*) which form the focal point of the Āgamas are, undoubtedly, the unfailing means of National Integration. They can very effectively prevent disruptive forces which, in the form of caste, colour and creed, economic disparities and cultural divergences, can shake the very foundation of society, sending whole nations to despair. The grand noble truth of the equality of all men before the eyes of God driven home by the *Caryāpāda* of the Pāñcarātra-texts indeed bears testimony to the cosmopolitan outlook of these texts Indeed, there is no room for the so-called "caste"- consciousness in the language of three Āgamas. They even warn the "caste-conscious" devotees of dare consequences should they feel that they are "polluted" by the touch of the so-called "untouchables" during temple festivities.

Although the *caryāpāda* thus provides substantial material for detailed studies, and has received considerable attention of scholars, the *jñānapāda* which sets forth the much-needed philosophical background for the whole gamut of worship has not received due recognition of scholars over the years.

Prof Lakshminarasimha Bhatta richly deserves our gratitude and admiration for shedding abundant light on this aspect of the Pāñcarātra Samhitās, in the present publication. In a refreshingly sweet and simple style, Dr. Bhatta highlights many

concepts which became the very basis of the Śrīvaisnava philosophy of Śrī Rāmānuja which is now popular as *Viśiṣṭādvaita*. The concept of Lord Viṣṇu's supremacy, His inseparable relationship with Śrī or Lakṣmī, His being the sole cause of creation, sustenance, bondage, dissolution and liberation of the souls; His being the redeemer of even the low and high through *Bhakti* or *Prapatti*, that He abides in a supra-mundane realm called Vaikuntha and that He is attended upon by the liberated and ever-liberated souls, that He has a unique auspicious body (*divyamangala-vigraha*) and that He is an inexhaustible abode of innumerable perfections of unexcelled splendour are all detailed in the *jñānapāda* of the Pāñcarātra. The concept of Prapatti being the unfailing means of salvation and that it has five or six auxiliaries of which "mahāviśvāsa" is of utmost importance, finds a detailed exposition in the Pāñcarātra-texts

Prof. Bhatta has taken great pains to correlate these concepts found in a variety of texts, like the Ahirbudhnya, Sāttvata, Jayākhya and Viṣṇutilaka Samhitās The Bibliography found in this work of the learned author is at once arresting and amazing, indicating his profound and wide range of scholarship. I am glad that this excellent work is now being published for the benefit of scholars. This can form the source-book, for a variety of themes which scholars may develop and study with great advantage. I am sure that this highly authoritative and profusely documented publication will occupy the pride of place in the field of Pāñcarātra-literature.

May I therefore pray the Almighty to bless Prof Lakshminarasimha Bhatta with sound health and longevity so that many valuable works of this nature and calibre can emerge from his vibrant pen.

**Prof. M. NARASIMHACHARY**



# विषयानुक्रमणिका

| अध्याय: | विषय: | पृष्ठम् |
|---|---|---|

## ग्रन्थावतरणिका

**श्रीलक्ष्मीस्तनकस्तूरीलाञ्छनायतवक्षसे।**
**श्रीमत्करिगिरीशाय नारसिंहाय ते नमः ॥**

अध्यात्मचिन्तनप्रधानेऽस्मिन् भारतवर्षे परमपुरुषार्थमोक्षोपाय-प्रकाशकानां दर्शनानां निरन्तरप्रचार· अनादे· कालात् प्रवर्तते । तेषु श्रुत्यर्थसारोपदेशकम् आगमशास्त्रं सकलशास्त्रमूर्धाभिषिक्तमिति जेगीयते विद्वद्वरेण्यै· ।

सकललोकोज्जीवनाय प्रवृत्तेषु तन्त्रापराभिधानेष्वागमेषु पञ्चरात्रमभ्यर्हितमिति, ज्ञान-योग-क्रिया-चर्यापादेषु विभक्तं पञ्चरात्रं नारायणपारम्य-ब्रह्मरुद्रादिगतसृज्यत्व-अर्चारूपभगवदाराधनादिपरमिति च विपश्चितो विदन्ति।

आगमग्रन्थानां सर्वेषामप्यध्ययनपूर्वकं कश्चन विषयप्रधानः आगमकोशः निर्मातव्य·, अमुद्रिताश्च आगमग्रन्थाः नवीनसंस्करणपूर्वकं प्रकाशनीया इति तिरुपति केन्द्रीयसंस्कृतविद्यापीठसंस्थापकनिदेशकानां प्रो. बि.आर्. शर्म महोदयानां योजना आसीत्। तदनुरोधेन तत्रत्यैरुद्योगिभिः प्रकाशनयोग्यानां पञ्चरात्रसंहितानां नवीनानि संस्करणानि संपाद्यन्ते। एतत्कार्यक्रमान्तर्गततया अस्माभि· 1972 वर्षे विष्वक्सेनसंहिता संपाद्य प्रकाशिता।

ततः भूयसा विदुषामपरिचितस्य पञ्चरात्रागमस्य परिचायने कृतसंकल्पानस्मान् 'पञ्चरात्रसंहितासु ज्ञानपादसमीक्षणम्' इत्येतद्विषयमधिकृत्य संशोधनं कर्तुमुपदिश्य तिरुपतिकेन्द्रीयसंस्कृतविद्यापीठस्य तदानींतनप्राचार्याः तत्रभवन्त· प्रो.मल्लादि.द.बालसुब्रह्मण्यमहोदयाः प्रैरयन् । तदनुगुणतया पञ्चभिरध्यायैरुपेत· 'पञ्चरात्रसंहितासु ज्ञानपादसमीक्षणम्' इत्येतच्छीर्षकोपेतः शोधप्रबन्धोऽय विद्यावारिध्युपाधये श्रीमतां प्रो.उ.शंकरभट्टमहोदयानां मार्गदर्शने सज्जीकृत.।

यद्यपि जर्मन् विदुषा ओ.श्रेडर्महाशयेन विरचिते 'Introduction to the Pãñcarātra and the Ahirbudhnya Samhita' (पाञ्चरात्रागम-अहिर्बुध्न्यसंहितयोः उपोद्धात.) इत्यस्मिन् ग्रन्थे अहिर्बुध्न्यसंहिताया ज्ञानपादप्रतिपाद्यानां विषयाणां परिचयः उपकल्प्यते, यद्यपि डा.एस्.आर्भट्टमहोदयैः कतिपयपञ्चरात्रसंहिता आधृत्य "The Philosophy of Pãñcarātra - An Advaitic Approach" इत्यस्मिन् ग्रन्थे पञ्चरात्रतत्त्वविचाराः विमृश्यन्ते, यद्यपि डा.अशोककुमारकालियामहाभागै 'लक्ष्मीतन्त्र धर्म और दर्शन' (लक्ष्मीतन्त्रे धर्मः दर्शनं च) इत्यस्मिन् ग्रन्थे लक्ष्मीतन्त्रगताः ज्ञानपादप्रतिपाद्यमाना विषयाः विवेच्यन्ते तथाप्येतैस्त्रिभि. पञ्चरात्रान्तर्गतस्य ज्ञानपादस्य समीक्षणं कार्त्स्न्येन न विहितमिति संप्रत्युपलभ्यमानासु प्रथिताः पञ्चरात्रसंहिताः परिशील्य पञ्चरात्रज्ञानपादसमीक्षणाय अस्माभिरत्रोद्यम्यते।

विद्यावारिध्युपाध्यर्थं शोधकार्ये प्रवृत्तानस्मान् शोधप्रबन्धशीर्षकमुपदिश्य उपकृतवद्भ्यः यशःकायेभ्यः भूतपूर्व तिरुपतिकेन्द्रीयसंस्कृतविद्यापीठप्राचार्येभ्य तत्रभवद्भ्य प्रो. मल्लादि. द. बालसुब्रह्मण्यमहाशयेभ्यः, शोधप्रबन्धलेखने मार्गदर्शनं विधाय नितरामुपकृतवद्भ्य साहित्यविभागप्रमुखेभ्यः यशःकायेभ्य प्रो.उ.शंकरभट्टमहाशयेभ्यश्च सकार्तज्ञ्यं धन्यवादान् व्याहराम. । शोधप्रबन्धेऽस्मिन् अपेक्षितेषु तात्त्विकविचारेषु अपेक्षितानंशानुपवर्ण्य सहकृतवतः प्रो.एम्.एल्. नरसिंहमूर्तिमहोदयान्, मुहुर्मुहुः स्मरामि - तदुपकार सहस्रमभिनन्दामश्च । पञ्चरात्रागमसंबन्धिनो दुरूहान् विचारान् प्रबोध्य उपकृतवद्भ्यः तथा ग्रन्थस्यास्य संस्तवलेखनेन अनुगृहीतवद्भ्य तिरुपतिराष्ट्रियसंस्कृतविद्यापीठस्य कुलपतिचरेभ्यः गुरुवर्येभ्य सकलविद्वत्कुलसंमानितेभ्यः चतुस्तन्त्रेष्वप्रतिहतप्रकटितवैदुष्येभ्य महामहोपाध्यायेभ्यः तत्रभवद्भ्य. प्रो.एन्.एस्. रामानुजताताचार्यवर्येभ्य नमोवाकं प्रयुञ्ज्म ।

ग्रन्थस्यास्य प्रस्तावनालेखनेनोपकृता वयं राष्ट्रियसंस्कृतविद्यापीठ-कुलपतिपदवीभूषितविग्रहै पूर्वोत्तरमीमांसाभूषणैः न्यायसाहित्यादि-शास्त्रनिष्णातै. प्रो. एस्.बि. रघुनाथाचार्यैस्तमेनममीषामुपकारभरं न विस्मरिष्यामः समुपहरामश्च तेभ्यो प्रशस्तिवादान्।

ग्रन्थस्यास्यामुखमाङ्ग्लभाषायां विलिख्य अनुगृहीतवद्भ्यः प्राच्यप्रतीच्यविद्यासंपन्नेभ्यः चेन्नै विश्वविद्यालये Vaishnavism विभागे आचार्यपदमधितिष्ठद्भ्य प्रो. एम्. नरसिंहाचार्येभ्य· कृतज्ञतापूर्वकं धन्यवादान् उपहरामः।

पञ्चरात्रशास्त्राध्ययने मां संप्रेर्य आगमविद्यामनुगृहीतवन्तः यशः कायाः पं. एम्.पि. वेङ्कटराजभट्टर्महोदयाः। प्रबन्धोऽयं तेषामनुग्रहेण संदृब्धः।

मुद्रणशोधनकर्मणि साहाय्यमाचरितवद्भ्य· राष्ट्रियसंस्कृतविद्यापीठे व्याख्यातृपदमलंकुर्वभ्यः डा. सि. राघवन् महोदयेभ्यः, विद्वद्भ्यः एस्. दक्षिणामूर्तिशर्ममहोदयेभ्यश्च कृतज्ञतापूर्वकं धन्यवादान् समर्पयाम·।

ग्रन्थस्यास्य प्रकाशनायोपकृतवद्भ्यः देवस्थानाधिकारिभ्यः, विशिष्य कार्यनिर्वहणाधिकारिभ्यः, प्रकाशयितुमनुमतिं दत्तवद्भ्यः तिरुपतिराष्ट्रियसंस्कृत-विद्यापीठाधिकारिभ्य·, सुन्दरं सम्मुद्र्य यथासमयं प्रकाशने उपकृतवद्भ्यः "अन्नपूर्णा ग्राफिक्स्" अधिकृतेभ्य· सादरं कार्तज्ञ्यमाविष्कुर्मः।

सर्वशक्तस्य भगवतः कृपया शोधप्रबन्धोऽयं विद्वदादरपात्रं भवत्वित्याशास्महे।

**लक्ष्मीनरसिंहभट्टः**



# शोधप्रबन्धेऽस्मिन् प्रयुक्ताः संकेताः तद्विवरणानि च

| संकेतः | विवरणम् |
| --- | --- |
| अनि. | अनिरुद्धसंहिता |
| अल. सा. भा. | अलसिंगभट्टकृतसात्त्वतसहिताभाष्यम् |
| अहि. | अहिर्बुध्न्यसंहिता |
| आ. प्रा. | आगमप्रामाण्यम् |
| आ. | आनन्दसंहिता |
| ई. | ईश्वरसंहिता |
| उ. अ. | उपनिषत्संग्रहे अध्यात्मोपनिषत् |
| उ. क. | उपनिषत्संग्रहे कठोपनिषत् |
| उ. तै. | उपनिषत्संग्रहे तैत्तिरीयोपनिषत् |
| उ. बृ | उपनिषत्संग्रहे बृहदारण्योकोपनिषत् |
| उ. म. | उपनिषत्संग्रहे महानारायणोपनिषत् |
| उ. मा. | उपनिषत्सग्रहे माण्डूक्योपनिषत् |
| उ. श्वे. | उपनिषत्सग्रहे श्वेताश्वतरोपनिषत् |
| ऋ. | ऋग्वेदसंहिता |
| एम्बार् कृ. ज. प्र. | एम्बार् कृष्णमाचार्यविलिखिता जयाख्यसंहिताप्रस्तावना |
| कपिं. | कपिञ्जलसंहिता |
| कामि. | कामिकागमः |
| कुला. | कुलार्णव तन्त्रम् |
| कृष्ण. लक्ष्मी. उपो. | कृष्णमाचार्य विरचित. लक्ष्मीतन्त्रोपोद्धात· |
| कौ. अर्थ. | कौटिलीयार्थशास्त्रम् |
| ज. | जयाख्यसंहिता |
| तत्त्वत्र. श्रीमद्र. | श्रीमद्रहस्यत्रयसारान्तर्गत तत्त्वत्रयाधिकार |
| त. स्प. प्र. | तन्त्रसग्रहे स्पन्दप्रदीपिका |
| दर्श. | दर्शनोदय |

| संकेतः | विवरणम् |
|---|---|
| द हे. नि | दशविधहेतुनिरूपणम् |
| दु. पा र उपो. | दुरैस्वामि अय्यगार् विलिखित· श्री पाञ्चरात्ररक्षोपोद्धात |
| देव. रामा. अहि. उपो | देवशिखामणि रामानुजाचार्यविरचित· अहिर्बुध्न्यसंहितोपोद्धात |
| ना प. | नारदपञ्चरात्रम् |
| नार. | नारदीयसंहिता |
| नि. | निरुक्तम् |
| न्या. कु. | न्यायकुसुमाञ्जलि |
| न्या. प. | न्यायपरिशुद्धि |
| न्या भा. | न्यायभाष्यम् |
| न्या. म. | न्यायमञ्जरी |
| पर. | परमसंहिता |
| पा.र | पाञ्चरात्ररक्षा |
| पात. त. वै. | तत्त्ववैशारदिसञ्ज्ञिका पातञ्जलयोग-दर्शनव्याख्या |
| पाद्म (ज्ञा) | पाद्मसंहिता ज्ञानपाद |
| पार. | पारमेश्वरसंहिता |
| पुरु. | पुरुषोत्तमसंहिता |
| पौ. | पौष्करसहिता |
| बा. म. सि. व्या. | बालमनोरमाख्या सिद्धान्तकौमुदीव्याख्या |
| बोधा. गृह्य. | बोधायनगृह्यसूत्रम् |
| भा. | भारद्वाजसंहिता |
| भाग सं. | भागवतसम्प्रदाय |
| भा द. इ. | भारतीय दर्शन का इतिहास |
| म. भा. | महाभारतम् |
| मा. | मार्कण्डेयसहिता |

| संकेतः | विवरणम् |
|---|---|
| य. | यज्ञाधिकार. |
| लक्ष्मी. | लक्ष्मीतन्त्रम् |
| वर. नि. श्रीविष्णुस. | वरदाचार्यसूरिविरचितनिर्वचनाख्यं श्रीविष्णुसहस्रनामस्तोत्र भाष्यम् |
| वा. | वासाधिकार. |
| वि. तन्त्रम् | विष्णुतन्त्रम् |
| वि. ति | विष्णुतिलकम् |
| वि. पु. | विष्णुपुराणम् |
| विमा. | विमानार्चनाकल्प |
| विश्वा. | विश्वामित्रसंहिता |
| वि. | विष्णुसंहिता |
| विष्व. | विष्वक्सेनसंहिता |
| विह. | विहगेन्द्रसहिता |
| वैखा. गृह्य. | वैखानसगृह्यसूत्रम् |
| वै. छा. म. | वैद्यनाथकृता छायाख्या महाभाष्यव्याख्या |
| वै. शै. अ. धा. | वैष्णव शैव और अन्य धार्मिक मत |
| व्र. सा. उपो. | व्रजवल्लभद्विवेदीविलिखित. सात्त्वतसंहितोपोद्घात. |
| श छान्दो भा | शंकराचार्यकृतं छान्दोग्योपनिषद्भाष्यम् |
| शं. ब्र. सू भा | शंकराचार्यकृत ब्रह्मसूत्रभाष्यम् |
| शब्द. | शब्दकल्पद्रुम |
| शा. | शाण्डिल्यसंहिता |
| श्रीप्र | श्रीप्रश्नसंहिता |
| श्रीमद्भ. | श्रीमद्भगवद्गीता |
| श्रीमद्रा. | श्रीमद्रामायणम् |

| संकेतः | विवरणम् |
|---|---|
| श्रुत | श्रुतप्रकाशिकाख्या श्रीभाष्यव्याख्या |
| स. | समूर्तार्चनाधिकरणम् |
| स. अनु | समूर्तार्चनाधिकरणानुबन्धः |
| सां का | सांख्यकारिका |
| सा. | सात्त्वतसंहिता |
| ह. (आदि) | हयशीर्षपञ्चरात्रम् (संहिता)(आदिकाण्ड ) |

सामान्यसंकेताः -

| | |
|---|---|
| द्र. | द्रष्टव्यम् |
| पृ. | पृष्ठम् |
| श्लो. | श्लोकाः |
| * | शोधप्रबन्धे उपस्थापितैर्विचारैः संबद्धाः श्लोकसंख्याबाहुल्यात् टिप्पण्यामनिर्दिष्टाः पञ्चरात्रसंहिताभ्यः उद्धृता ग्रन्थभागाः परिशिष्टरूपेण प्रबन्धान्ते संयोजिताः |

# प्रथमोऽध्यायः

## 1. वैष्णवागमः तत्परिचयश्च

### 1.1.0 आगमः

विदितमेव सर्वेषामास्तिकाना यदिह नानाविध दु·खपरम्परावाहिनि संसारे क्लिश्यमानं जीवजातमनुजिघृक्षुः करुणापयोधि· परमात्मा स्वतःप्रमाणमपौरुषेयं वेदाख्यं ग्रन्थराशिं चतुर्मुखाय समुपादिशत्[1], अतिगम्भीरार्थस्य तस्य वेदस्यानायासावगमाय वेदार्थोपबृंहकान् आगमाननुजग्राह चेति । संसारिणामुद्दिधीर्षया भगवता प्रवर्तिताः अविच्छिन्नगुरुशिष्यपरम्परागता आगमाः अद्यापि आस्तिकैर्भारतीयैः सश्रद्धमुपास्यन्ते।

आङ्पूर्वकाद् गम्लृधातोः 'ग्रहवृदृविनिश्चिगमश्च' (३-३-५८) इति पाणिनिसूत्रेण निष्पन्नस्यागमशब्दस्यार्थ· महाभाष्यव्याख्यात्रा तत्रभवता वैद्यनाथेन 'आगम्येते प्रमीयेते हिताहितप्राप्तिपरिहारौ अनेन इति आगम·' इत्यादिना वेद इति निर्दिश्यते[2]। भगवद्गीतायाम् उत्पत्त्यर्थकत्वेन आगमशब्दः प्रयुज्यते[3] । तत्त्वावेदकशब्दप्रमाणाभिधायकतया आगमशब्द· 'तस्मादपि चासिद्धं परोक्षमाप्तागमात् सिद्धम्' इति सांख्यकारिकायां प्रयुक्तो दृश्यते[4] । प्रमाणनयतत्त्वालंकारे (४.१) 'आप्तवचनादाविर्भूतः अर्थविशेषसंवेदनरूप.

---

1. यो ब्रह्माण विदधाति पूर्व यो वै वेदाश्च प्रहिणोति तस्मै श्वे ६ १८
2. वै म भा छा पृ १७
3. श्रीमद्भ २.१४
4. सा का ६

आगमः'[5]इति प्रोच्यते। ततश्च आगमपदं शब्दप्रमाणमवगमयतीति वक्तुं शक्यते।

अन्येषु ग्रन्थेषु पुनरागमपदार्थः सृष्टिप्रलयादिसप्तलक्षणैः समन्वितः ग्रन्थसन्दर्भः[6]; शिवात् गिरिजायै उपदिष्टं वासुदेवमतविषयकं ग्रन्थजातम्[7]; अभ्युदयनिःश्रेयसोपायानां बुद्ध्यारोहसाधनः ग्रन्थसमूहः[8]; अनादिसंप्रदायसिद्धगुरुशिष्यपरम्परोपदेशक्रमागतः शास्त्रसन्दर्भो[9] वा आगमः इति बहुभिः प्रकारैः निर्दिश्यते। एतत्परिशीलनेन अहितनिवारकः हितप्रापकश्च ग्रन्थसमुदायः आगमपदार्थ इति वक्तुं शक्यते।

यद्यपि कल्पादौ भगवता ब्रह्मणे, ब्रह्मणा ऋषिभ्यः, ऋषिभिः तच्छिष्येभ्यश्चेति क्रमेणावतीर्णो वेदराशिः अभ्युदयनिःश्रेयसोपायान् उपदिशन् आगमपदेन व्यपदेष्टव्यो भवति तथापि वेदराशिः निगमपदेन, वेदोपबृंहकः ग्रन्थराशिः आगमपदेन च प्रायो व्यपदिश्यत इति नैतदतिरोहितं विदुषाम्।

आगमः तन्त्रसंज्ञया च प्रथते। तनुधातोः ष्ट्रन्प्रत्यये तन्त्रशब्दो निष्पद्यते। तन्त्रपदार्थं शास्त्रकाराः इतरेतराभिसंबन्धस्यार्थजातस्य उपदेशकं शास्त्रमिति[10] कथयन्ति चेत् तान्त्रिकाः तन्त्रमन्त्रसमाश्रितविपुलार्थविस्तरणपुरःसरं

---

5. द्र दर्श पृ ४९०

6. सृष्टिश्च प्रलयश्चैव देवताना तथार्चनम्।
साधन चैव सर्वेषा पुरश्चरणमेव च॥
षट्कर्म साधन चैव ध्यानयोगश्चतुर्विध.।
सप्तभिर्लक्षणैर्युक्त त्वागम तद्विदुर्बुधा॥
शब्द. पृ. १६५

7. आगत पञ्चवक्त्रात्तु गतं च गिरिजानने।
सुमत वासुदेवस्य तस्मादागममुच्यते॥
Ibid पृ १६५

8. आगच्छन्ति बुद्धिमारोहन्ति यस्मादभ्युदयनि श्रेयसोपाय स आगम.।
पात तत्त्ववै. पृ. २८

9. कृष्ण लक्ष्मी उपो पृ १

10. न्या. भा १ १ २६ पृ १३०, १

भयत्राणनकारि[11], तन्त्रोक्तभगवद्बिम्बप्रतिष्ठार्चनादिकर्तुस्त्राणनकारि[12], सर्गप्रतिसर्गादिप्रतिपादनपरं[13] वा शास्त्रमिति वदन्ति।

तन्त्रापराभिधानः आगमः निगमवत् प्रमाणमिति त्रय्यन्तनिष्णाताः विश्वसन्ति।

### 1.1.1. आगमस्य प्रामाण्यम्

वेदाविरोधेन प्रवृत्तानाम् आप्तप्रणीतानां च शैवाद्यागमानां प्रामाण्यं न्यायमञ्जर्यां जयन्तभट्टैः -

*वेदे च पदे पदे एक एव रुद्रोऽवतस्थे*
*न द्वितीय इति, इदं विष्णुर्विचक्रमे इति*
*रुद्रो विष्णुश्च पठ्यते। तद्योगाच्च तदा-*

---

11. सर्वेऽर्था येन तन्यन्ते त्रायन्ते च भयाज्जना॥
इति तन्त्रस्य तन्त्रत्व तन्त्रज्ञा परिचक्षते।

वि २ १० cd, १ ab;

तनोति विपुलानर्थान् तत्त्वमन्त्रसमाश्रितान्।
त्राणं च कुरुते यस्मात् तन्त्रमित्यभिधीयते॥

कामि. १ २९

12. आवाहनासनाद्यैश्च तन्त्रोक्तैर्यो यजेत माम्।
तं तारयति जन्माद्यैर्यत तत्तन्त्रमितीरितम्॥
तन्त्रेण तेन मार्गेण यो मा नित्य समर्चयेत्।
ततो विपुलसंज्ञान मत्प्रतिष्ठादिगोचरम्॥
त्राणं च कुरुते यस्मात्तत्तन्त्रमितीरितम्।

वि. तन्त्र १ ८३-५ ab

13. सर्गश्च प्रतिसर्गश्च मन्त्रनिर्णय एव च।
हरचक्रस्याख्यानं स्त्रीपुंसोश्चैव लक्षणम्॥
राजधर्मो दानधर्मो युगधर्मस्तथैव च।
व्यवहार कथ्यते च तथा चाध्यात्मवर्णनम्॥
इत्यादि लक्षणैर्युक्त तन्त्रमित्यभिधीयते। शब्द पृ ५८४

*राधनोपाया वेदेऽपि चोदिता एव। शैव-*

*पञ्चरात्रयोस्तु तद्योगा एवान्यथोपदिश्यन्ते।*

*न चैव वेदविरोधो वैकल्पिकत्वात्तदुपायानाम्।*

*अत आप्तप्रणीतत्वाद्वेदाविरुद्धत्वाच्च न*

*तयोरप्रामाण्यम्। ये तु सौगतसंसारमोचना-*

*गमाः पापकाचारोपयोगिनः कस्तेषु प्रामाण्य-*

*मार्योऽनुमोदते*[14] *॥*

इति।

ननु देवताविग्रहप्रतिष्ठादिकं प्रतिपादयत् आगमशास्त्रं प्रसिद्धेषु चतुर्दशसु विद्यास्थानेषु[15] अपरिगणितत्वादप्रमाणमिति चेत् न। तस्य धर्मशास्त्रत्वेनाङ्गीकारात्। तथा हि- वेद कर्मकाण्ड-ब्रह्मकाण्डभिदया द्वेधा विभक्तः। वेदस्य पूर्वो भाग कर्मकाण्ड इति परो भागः ब्रह्मकाण्ड इति च व्यपदिश्यते। भगवदाराधनरूपान् यागादीन् धर्मान् सुविशदं प्रतिपादयन्त्यः मन्वादिस्मृतयः धर्मशास्त्रसंज्ञयेव ब्रह्मकाण्डसंज्ञके वेदोत्तरभागे प्रतिपाद्यस्य भगवदुपासनरूपधर्मस्य विविधान् प्रकारान् सुविशदं प्रतिपादयदागमशास्त्रमपि धर्मशास्त्रसंज्ञया व्यवह्रियते। अत एवोक्तं निगमान्तगुरुवर्यैः न्यायपरिशुद्धौ -

*यानि पुनः साङ्ख्ययोगपाशुपत-*

*पञ्चरात्राणि तान्यपि धर्मशास्त्रभेदा एव*[16] इति।

---

14 न्या म पृ २४२

15 अङ्गानि वेदाश्चत्वारो मीमासान्यायविस्तर ।
पुराण धर्मशास्त्र च विद्या ह्येताश्चतुर्दश॥ वि पु. ३.६

16 न्या प पृ २८७

अत्रत्यं पञ्चरात्रपदं वैखानसस्याप्युपलक्षणम्। देशिकवर्याः तत्रैव वैखानसप्रामाण्यसमर्थनावसरे

*तत् कतमां विधामवलम्ब्यामीषा*
*प्रामाण्यमुच्यते। मन्वत्रिभार्गवा-*
*दिवत् नारदीयादिवच्च धर्मशास्त्र-*
*तयैव तेषामपि प्रामाण्यम्*[17]

इति निर्दिशन्ति।

## 1.2.0. आगमस्य आत्मोन्नतिसाधकत्वम्

यज्ञयागादिना भगवन्तमुपास्य मानवैः आत्मोन्नतिः साधनीयेति वेदा आदिशन्ति चेत् विग्रहाराधनादिना भगवन्तमुपास्य आध्यात्मिकोन्नति आसादनीयेति आगमाः उपदिशन्ति। आत्मोन्नतिसाधकत्वं निगमेषु आगमेषु च समानमित्यतः निगमवत् आगमं च आस्तिका आद्रियन्ते।

## 1.2.1. आगमस्य विग्रहाराधनबोधकत्वम्

विग्रहाराधनं देवालयेषु प्रचलति। आगमः - शिल्पशास्त्र - पाण्डित्यम् इत्येतेषां त्रयाणां समन्वयेन देवालयानामाविर्भाव इति निश्चप्रचमेतत्। कोविदः प्रतिमानिर्माणे सिद्धहस्तश्च शिल्पी शिलादिषु भगवन्मूर्तीः समावेशयति चेत् आगमशास्त्रज्ञः तासु मूर्तिषु अनुष्ठानबलेन प्राणं प्रतिष्ठापयति। शास्त्रसंमतैः क्रियाकलापैः प्रतिष्ठितास्ता मूर्तयः देवालये समाराध्यमाना भक्तानाम् अभीप्सितार्थमुपकल्पयन्तीति आगमपारदृश्वान आमनन्ति।

---

17 Ibid पृ 296

शिलादिभि· निर्मितासु प्रतिमासु भगवत्सांनिध्यं कथं भवतीति केचन शङ्कन्ते। अत्र आगमग्रन्था· - 'सर्वगतोऽपि वायुर्यथा व्यजनेन व्यक्तो भवति तथा आवाहनविधानेनाहृत· सर्वगतोऽपि भगवान् बिम्बाकारेण बिम्बे समागत्य व्यक्तो भवति[18] इति समादधति। न्यायकुसुमाञ्जलिकारस्य तत्र भवतः उदयनाचार्यस्य -

*प्रतिमादयस्तु तेन तेन विधिना*

*संनिधापितब्रह्मरुद्रोपेन्द्रमहेन्द्रा-*

*द्यभिमानिदेवताभेदास्तत्र तत्रा-*

*राधनीयतामासादयन्ति*[19]

इत्येतद्वाक्यमप्यत्र समाधायकमास्ते।

आगमोक्तक्रमेण निर्मितासु प्रतिष्ठापितासु च शिलाप्रतिमादिषु परब्रह्मणः अर्घ्यपाद्याचमनीयाद्यैरुपचारैरर्चनं वेदादिसंमतमिति आगमिका. कथयन्ति। तथा हि-

*प्रवः पान्तमन्धसो धियायते*

*महे शूराय विष्णवे चार्चत*[20]

---

18 यथा सर्वगतो वायुर्व्यजनेन महामते।
व्यक्तमभ्येति भगवानाहूतस्तद्वदेव हि।
बिम्बाकृत्यात्मना बिम्बे समागत्यावतिष्ठते।

सा ६ १६ cd, १७ ab, २२ ab

गवा मर्वाङ्गज क्षीर स्रवेत् स्तनमुखाद्यथा।
तथा सर्वगतो देव प्रतिमादिषु राजते॥

कुला ६ ७५

19 न्या कु पृ. २९

20 ऋ १ १५५.१

इति ऋग्वेदवाक्येन विष्ण्वर्चनं विधीयते। तदर्चनम् अमूर्त-समूर्तभेदेन द्विविधम्। अग्नौ हविरर्पणपूर्वकं पूजनम् अमूर्तार्चनम्, आलयेषु प्रतिष्ठितेषु भगवद्विग्रहेषु अर्घ्यपाद्याद्यैरुपचारैरर्चन समूर्तार्चनम्, यजधातुवाच्यमाराधनममूर्तम्, अर्चधातुवाच्यमाराधनं समूर्तमिति अमूर्त-समूर्तार्चनयोर्मिथो भेदः[21]; यजधातुप्रयोगे अमूर्तार्चनम्, अर्चधातुप्रयोगे समूर्तार्चनं च विवक्षितमिति यावत्। तदनुरोधेन उदाहृतमर्चधातुप्रयोगवच्छ्रुतिवाक्यं समूर्तार्चनं विधत्त इति स्वीकृत्य प्रतिमासु भगवदर्चनं वेदसंमतमिति आगमिकाः प्रतिपादयन्ति। एतदनुरोधेन-

शौनकोऽहं प्रवक्ष्यामि नित्यं विष्ण्वर्चनं परम्।

इत्यादौ विष्ण्वर्चनादिपदैर्विष्णुप्रतिमार्चनं विधीयत इत्यङ्गीकरणीय भवति।

## 1.2.2. विग्रहाराधनस्य श्रुत्यादिसंमतत्वम्

बोधायनवैखानसप्रभृतयः कल्पसूत्रकाराश्च वेदोक्तयजनमार्ग-विशदीकरणाय विष्ण्वर्चनप्रतिष्ठादिपराणि सूत्राणि समारचयन्[22]। रामायणे विष्ण्वादिदेवालयाः निर्दिश्यन्ते[23]। विष्णुपुराणे भगवतः स्वेच्छयैव नानाविधदिव्यमङ्गलविग्रहपरिग्रहः उपवर्ण्यते[24]। तत्र भवता यास्काचार्येण निरुक्ते देवतानां बहुविधाः प्रतिमाः उपवर्ण्यन्ते[25]। कौटिल्येन अर्थशास्त्रे

---

21. 'मूर्तिपूजा वैखानसागमश्च' - सञ्ज्ञके लेखे - प्रो एन्. एस् रामा The Samskrita Academy Diamond Jubilee Commemoration Volume, Madras, १९९०
22. बोधा. गृह्य. २.१३ १, २ १४ १, वैखा गृह्य ४ १० ३, ४.१२ १
23. श्रीमद्रा II.६.४
24. वि पु ६ ५ ८४
25. नि ७ १ २

देवागारनिर्माणपरिपालनादिकमुपवर्ण्यते[26]। पाणिनिना देवप्रकृतिः इत्यस्मिन्नर्थे देवपथशब्द· निष्पाद्यते[27]। श्रीशंकराचार्या विग्रहे परमात्मोपासनं श्रेष्ठं सर्ववेदान्तसमतमिति अभिप्रयन्ति[28]। भगवतः पर - व्यूह - विभव - अन्तर्यामि - अर्चासंज्ञकेषु पञ्चसु रूपेषु सर्वसुलभ भक्तानां क्षिप्रसिद्धिप्रदम् अर्चारूपमेवेति तत्रभवता वेदान्तदेशिकमहोदयानामभिप्राय.[29]।

तथा च विग्रहार्चनमनादिसंप्रदायसिद्धं सत् श्रुतिसंमतमिति वक्तुं शक्यते।

## 1.3. आगमभेदाः

सांस्कृतिकमाध्यात्मिकं चाभ्युदयमावहन्नसौ वैदिकागम· वैष्णव - शैव - शाक्तभेदेन त्रेधा भिद्यते। तत्र शिवपारम्यप्रतिपादकः शैवागमः शैव - पाशुपत - सोम - लाकुलभेदेन कापाल - कालामुख - पाशुपत - शैवभेदेन वा यथा भिद्यते, यथा च शक्तिपारम्यबोधकः शाक्तागमः दक्षिणाचार - वामाचारभेदेन भिद्यते तथा विष्णुपारम्यप्रतिपादक· वैष्णवागम· वैखानस - पञ्चरात्रभेदेन द्विधा भिद्यते।

## 1.4. दक्षिणापथे आगमसंप्रदायः

वेदशास्त्रादिपारदृश्वनां महर्षीणां बुद्धिवैभवेन, आध्यात्मिक-चिन्तनानुरक्तानां राज्ञामौदार्येण, बिम्बादिनिर्माणपरिणतानां शिल्पिनां हस्तकौशलेन, समूर्तार्चनप्रयोगाभिज्ञानानाम् आगमपण्डितानां देवयजनक्रियापाटवेन च भारते आसेतुशीताचलम् उत्तुङ्गै· गोपुरैः विस्तृताभिः प्राकारभित्तिभिश्च विभ्राजमानेषु देवालयेषु आगमसंप्रदायानुरोधेन प्राक्तने काले

26 कौ अर्थ पृ ६३

27 पाणिनिना 'देवपथादिभ्यश्च' (५ ३ १००) इत्यनेन सूत्रेण निष्पाद्यमान· देवपथशब्द देवप्रतिकृतिमभिदधत् भगवत अर्चारूप निर्दिशति।

बा म सि व्या. पृ ९२०

28. श भा. छान्दो १ १ १

29 द्र पा र पृ १६२

भगवदाराधनं प्रवर्तते स्म। यद्यप्युत्तरभारते पौनःपुन्येन विदेशीयानामाक्रमणात् आगमसंप्रदायोऽद्य विनष्टवद्भासते तथापि दक्षिणापथे भगवदाराधने समुज्जृम्भत एवागमसंप्रदायः। शैववैष्णवागमयो· संप्रदायः दक्षिणापथे तत्तन्मताचार्यै सुरक्षितो भासते। भव्येषु पर्वताग्रेषु मनोहरेषु नदीतीरनगरादिषु च शिल्पशास्त्रानुसारेण निर्मितेषु देवालयेषु भगवदाराधनमागमानुरोधेनाद्य प्रचलति।

## 1.5. आगमप्रतिपाद्यम्

देवालयनिर्माणयोग्यभूसंग्रहणम्, देवालयनिर्माणम्, बिम्बनिर्माणम्, नित्यनैमित्तिकार्चनम्, उत्सव., प्रायश्चित्तम्, जीर्णोद्धारः - इत्येते सर्वेष्वागमेषु अविशेषेण प्रतिपाद्यन्ते। आगमग्रन्थः भारतीयानामाध्यात्मिकज्ञानविकासस्य प्रतीकवद्विराजन्ते। किं तु वैष्णवागमेषु विष्णोरेव आलय - बिम्ब - अर्चन - उत्सवप्रभृतयः विस्तरेणोपवर्ण्यन्ते।

## 1.6.0. वैष्णवागमः

दक्षिणापथे प्रथितो वैष्णवागमः वैखानस - पञ्चरात्रभेदेन द्विधा प्रसिद्धो वर्तते। तैत्तिरीयशाखानामन्यतमाम् औखेयशाखामनुसरन्तो वैखानसाः, एकायनशाखानुसारिणः सात्त्वतादिपदाभिधेयाः पञ्चरात्रिणश्च भारते लब्धप्रतिष्ठेषु विष्ण्वालयेषु अर्चनाभिरता विलसन्ति।

## 1.6.1. वैखानसागमः

संसारनिवृत्तिः विष्णवर्चनैकसाध्येति प्रतिपादितवता विखनसा अनुगृहीतो वैदिकमार्गानुसारी वैखानसागमः तच्छिष्यै· मरीच्यत्रिभृगुकाश्यपैः प्रसारितः गुरुशिष्यपरम्परायातः सन् लब्धप्रतिष्ठो राजते।

## 1.6.2. वैखानसागमस्य विष्णुपारम्यबोधकत्वम्

'विष्णु(र्वै)सर्वा देवताः, पुरुष एवेदं सर्वम्' (ऋ.८.४.१७), 'स ब्रह्म स शिव· सेन्द्र·' (तै.आ.८.२६), 'एष ब्रह्मा एष इन्द्रः एष प्रजापति· एष सर्वा

देवता , अग्निर्वै देवानामवमः, विष्णुः परमः, तदन्तरेण सर्वा अन्या देवताः' (ऐत.ब्रा.१प.अ.१), 'तस्मात्परं नापरमस्ति किंचित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्, वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् (तै.उ.४.) (परं ब्रह्म परं ज्योतिः आपो ज्योतिः)'[30] - इत्यादिभिः श्रुतिवाक्यैरुपवर्ण्यमानं विष्णुपारम्यं वैखानसागमः प्रतिपादयति। तथा हि -

श्रियःपतिः भगवान् विष्णुरेव परमं तत्त्वम्;[31] तत्प्राप्तिरेव मोक्षः[32]; अमूर्तसमूर्तभेदेन द्विविधं भगवदर्चनं मोक्षोपायः[33]; द्विविधे चास्मिन् भगवदर्चने द्वितीयं समूर्तार्चनं श्रेयः[34]; समूर्तं चैतदर्चनम् आलयार्चा गृहार्चा चेति द्विविधम्[35]; तत्र आलयार्चा ज्यायसी[36] इति वैखानसागमग्रन्थेषु प्रतिपाद्यते। मोक्षोपायस्य विष्णवर्चनस्य विष्णुपारम्यसिद्ध्यधीनत्वात् विष्णुपारम्यं सर्वेषु वैखानसागमग्रन्थेषु प्रथमतः प्रस्तूयते।

विष्णुरेव परात्पर इत्यत्र श्रुतिप्रमाणं प्रदर्श्य भगवता मरीचिना स्वविमानार्चनाकल्पे विष्णुरेव भजनीयः स एव भक्तजनेभ्यः मोक्षदाने समर्थ इति प्रतिपाद्यते। चतुर्वेदोद्भवैर्मन्त्रैर्भगवदाराधनेन परात्परस्य देवानामपि दुर्लभस्य परमपदस्य प्राप्तिर्भवति। आलयार्चनं मुक्तेः प्रशस्तं साधनमिति वैखानसगमग्रन्था उपवर्णयन्ति।

### 1.6.3. वैखानसागमप्रवक्ता

वैखानसागमस्य प्रवक्ता विखनाः, भगवन्नारायणः, तन्नाभिनलिन-

---

30. विमा. पृ. २,३
31. स. १.६
32. Ibid १ २६
33. विमा. पृ. ५ & ५०९
34. Ibid पृ ५
35 स १ ३५ ab
36 Ibid १.३७ ab

संभवश्चतुराननो वा इति प्रथते । 'वैखान सामगायनः'[37] इति विष्णुसहस्रनामपाठात् विखना विष्णुरिति, 'विखनसं च विधातार विरिञ्चि तं चतुर्मुखम्'[38] इति निघण्टुपाठात् विखनाः चतुर्मुख इति च परिगणयन्तो वैखानसाः वैखानसकल्पसूत्रकारं विखनोमहर्षिं विष्णोश्चतुर्मुखस्य वाऽवतारं मन्यन्ते ।

**1.6.4.** *वैखानसागमस्य विष्णवर्चनप्रकारोपदेश-*

*कत्वम् अथाग्नौ नित्यहोमान्ते विष्णोर्नित्यार्चा*

*सर्वदेवार्चा भवति[39] । अग्निर्वै देवानामवमो*

*विष्णुः परमस्तदन्तरेण सर्वा अन्या देवता*

*इति ब्राह्मणम्[40] । तस्माद् गृहे परमं विष्णुं*

*प्रतिष्ठाप्य सायं प्रातर्होमान्तेऽर्चयति[41] ।*

... ...

... ...

*यज्ञेषु विहीनं तत्संपूर्णं भवति इति*

*श्रुतिः[42] । द्विजातिरतन्द्रितो नित्यं*

*गृहे देवायतने वा भक्त्या भगवन्तं*

37. श्लो ११९
38. द्र.द.हे.नि. पृ. ८८
39. वैखा गृह्य. सू ४.१० १
40. Ibid ४ १० २
41. Ibid. ४.१० ३
42 Ibid ४.१२ ९

*नारायणमर्चयेत्*[43] *। तद्विष्णोः परम*

*पद गच्छतीति विज्ञायत*[44] *।*

इत्यादिभिः कल्पसूत्रैर्विखनो मुनिः गृहे आलये वा प्रतिष्ठापुरःसरं विष्णुप्रतिमार्चनं कर्तव्यमित्युपदिशति।

## 1.6.5. वैखानसागमप्रतिपाद्यम्

समूर्तार्चनमग्निहोत्रसममिति वैखानसागमः प्रतिपादयति। तथा हि -

अग्न्यायतने अग्निप्रतिष्ठा इव आलये भगवद्विग्रहस्य प्रतिष्ठा भवति। अग्न्यायतनेषु हिरण्यशकलनिधानमिव देवायतने रत्नन्यासो विधीयते। सभ्य - आहवनीय - अन्वाहार्य - गार्हपत्य - आवसथ्यसंज्ञकाः पञ्च अग्नय इव ध्रुव - कौतुक - उत्सव - स्नपन - बलिसंज्ञकानि पञ्च बेराणि भवन्ति। सभ्यादीनां पञ्चानामग्नीनां विष्णु - पुरुष - सत्य - अच्युत - अनिरुद्धाः पञ्च भगवन्मूर्तय· अधिदेवता· सन्ति। नित्याग्निहोत्रतुल्यं नित्यार्चनम्। दर्शपूर्णमासज्योतिष्टोमादि-समानाः स्नपनमहोत्सवादयः। तस्मात् समूर्तयजनमग्निहोत्रसमं भवति इति वैखानसागमग्रन्था· उपवर्णयन्ति[45]।

## 1.6.6. वैखानसागमप्रामाण्यम्

बादरायणेन ब्रह्मसूत्रेषु पञ्चरात्रवत् वैखानसस्य प्रामाण्यं न स्थापितम्। अतो वैखानसागमोऽप्रमाणमिति केचन आक्षिपन्ति। सोऽयमाक्षोपो न संगच्छते, पञ्चरात्रे अप्रामाण्यापादकवदाभासमानानां कारणानां प्रसक्तेः तत्प्रतिसमाधानं पञ्चरात्रप्रामाण्यं च ब्रह्मसूत्रेषु प्रतिपादितम्, परं वैखानसागमे तादृशानां

43. Ibid ४.१२.१०

44 Ibid ४ १२ ११

45. 'मूर्तिपूजा वैखानसागमश्च' संज्ञके लेखे डा. एन् एस्. रामा - The Samskrita Academy Diamond Jubliee Commemoration Vol Madras, १९९०

कारणानामभावात् अप्रामाण्यकारणनिराकरणस्य वा प्रामाण्यप्रतिष्ठापनस्य वा नासीत् प्रसक्तिरिति वैखानसागमो बादरायणेन ब्रह्मसूत्रेषु न प्रस्तुत इति सुवचत्वात् । यामुनाचार्यादयोऽपि आगमप्रामाण्यादिषु ग्रन्थेषु पञ्चरात्रस्य निर्मूलत्वादीन् अप्रामाण्यहेतून् समादधिरे। वैखानसे परमप्रामाण्यशङ्काया एव विरहात् तत्प्रामाण्यप्रतिष्ठायै यामुनाचार्यादयो नायतन्त।

यामुनाचार्यादिभिः पञ्चरात्रवत् वैखानसस्य प्रामाण्यं न प्रतिष्ठापितमिति हेतोर्वैखानसमप्रमाणमिति वदतां मुखमुद्रणाय वेदान्तदेशिकै न्यायपरिशुद्धौ प्रयुक्तः-

*वैखानसं . . . . . . . .*

*वेदाविरुद्धत्वात्, वैदिकमन्त्रैरेव*

*सकलकर्मविधानात्, सूत्रान्तराणामपि*

*कुण्डसंनिवेशलक्षणादिषु क्वचित् क्वचित्*

*तदुपजीवनात् वर्णाश्रमधर्माणामनुकूलं,*

*नारायणपरत्वप्रतिपादनादेरपि सत्व-*

*मूलत्वेन प्रामाण्यैकहेतुत्वात् . . . .*[46]

इत्यादिर्वाक्यसमूहोऽपि वैखानसागमस्य प्रामाण्यं प्रतिष्ठापयति।

## 1.6.7. वैखानसागमस्य आलयार्चनोपयोगित्वम्

विखनोमुनिमारभ्य अद्य यावत् वैखानसान्वये जातानां वैखानससूत्रोक्त-संस्कारशालिनां वैष्णवानामेव वैखानससंहितानुसारिषु भगवदालयेषु प्रवर्तते अर्चनाधिकारो नेतरेषाम् । तस्मादेवाद्य वैखानससूत्रोक्तप्रक्रियया

46 न्या प पृ. २९४

निर्वृत्तजातकर्मादिसंस्काराः भगवदाराधने नियताधिकारिणश्च वैखानसाः मरीचिप्रमुखैर्महर्षिभिः विरचितान् विमानार्चनाकल्पप्रभृतीन् आगमग्रन्थाननुसृत्य आलयार्चनं कुर्वन्ति।

### 1.6.8. वैखानसागमग्रन्थाः[47]

आलयार्चनप्रतिपादकाश्च वैखानसागमग्रन्थाः सन्ति बहवः। विखनसः कल्पसूत्राण्यवलम्ब्यैव भृग्वत्रिमरीचिकाश्यपाश्चत्वारो महर्षयः बहून् वैखानसागमग्रन्थान् व्यरचयन्। विमानार्चनाकल्पादिषु ग्रन्थेषु यद्यपि वैखानसग्रन्थाः नाम्ना निर्दिश्यन्ते तथापि सर्वेषां तेषां वैखानसग्रन्थानां वैखानसग्रन्थपरिगणने न दृश्यते मतैक्यम्। तथा हि -

मरीचि - अत्रि - भृगु - काश्यपसंज्ञकैश्चतुर्भिर्मुनिभिः प्रोक्ताः वैखानसागमग्रन्थाः तत्तद्ग्रन्थगतग्रन्थसंख्या च मरीचि - अत्रि - भृगुभिः प्रोक्तेषु विमानार्चनाकल्प - आनन्दसंहिता - समूर्तार्चनाधिकरण - वासाधिकार - यज्ञाधिकारसंज्ञकेषु ग्रन्थेषु निर्दिश्यन्ते।

वैखानसागमग्रन्थानां संज्ञासु, संख्यायां, वैखानसागमग्रन्थगत-ग्रन्थसंख्यायां च विमानार्चनाकल्पादिग्रन्थप्रवक्तॄणामैकमत्यं न दृश्यते। तथा हि-

मरीचिप्रोक्ते ***विमानार्चनाकल्पे***-

मरीचि चतुरशीतिसहस्रोत्तरैकलक्षग्रन्थमितान् जयसंहिता - आनन्दसंहिता - संज्ञानसंहिता - वीरसंहिता - विजयसंहिता - विजितसंहिता - विमलसंहिता - ज्ञानसंहिताख्यान् अष्टौ ग्रन्थान्, अत्रिः

47 अस्मिन् प्रकरणे 'वैखानसागमग्रन्था' इत्यादिषु पदेषु 'ग्रन्थ' शब्द प्रबन्धपर, 'वैखानसागमग्रन्थगतग्रन्थसख्या इत्यादिषु पदेषु द्वितीय 'ग्रन्थ' शब्द द्वात्रिंशदक्षरसमुदायपरश्चेति परिगणनीयो वर्तते।

अष्टोत्तराशीतिसहस्रग्रन्थयुतान् पूर्वतन्त्र - आत्रेयतन्त्र - विष्णुतन्त्र - उत्तरतन्त्रभिधानान् चतुरो ग्रन्थान्, भृगुः अष्टोत्तराशीतिसहस्रग्रन्थयुतान् खिल - पुरातन्त्र - वासाधिकार - चित्राधिकार - मानाधिकार - क्रियाधिकार - अर्चाधिकार - यज्ञाधिकार - वर्णाधिकार - प्रकीर्णाधिकार - प्रतिगृह्याधिकार - निरुक्ताधिकार - खिलाधिकाराख्यान् त्रयोदशग्रन्थान्, काश्यप चतुष्षष्टिसहस्रग्रन्थयुतान् सत्यकाण्ड - तर्ककाण्ड - ज्ञानकाण्डाभिधानान् त्रीन् ग्रन्थान् रचयामासुः इति निर्दिश्यते[48]।

मरीचिप्रोक्तायाम् ***आनन्दसंहितायां*** तु -

मरीचिनिर्मिताः चतुरशीतिसहस्रोत्तरैकलक्षग्रन्थयुताः जयसंहिता - आनन्दसंहिता - संज्ञानसंहिता - वीरसंहिता - विजयसंहिता - विजितसंहिता - विमलसंहिता - कल्पसंहिताभिधानाः अष्टौ ग्रन्थाः, अत्रिनिर्मिता. अष्टाशीतिसहस्रग्रन्थमिताः पूर्वतन्त्र - विष्णुतन्त्र - उत्तरतन्त्र - महातन्त्रभिधाः चत्वारो ग्रन्थाः, भृगुप्रोक्ताः चतुष्षष्टिसहस्रग्रन्थयुताः खिल - खिलाधिकार - पुराधिकार - वासाधिकार - अर्चाधिकार - मानाधिकार - क्रियाधिकार - निरुक्ताधिकार - प्रकीर्णाधिकार - यज्ञाधिकाराख्याः दशग्रन्था., काश्यपकृताः चतुष्षष्टिसहसग्रन्थोपेताः सत्यकाण्ड - कर्मकाण्ड - ज्ञानकाण्डाख्यास्त्रयो ग्रन्था. परिगण्यन्ते[49]।

अत्रिप्रोक्ते ***समूर्तार्चनाधिकरणे*** पुनः -

अङ्गिरसा[50] एकलक्षग्रन्थोपेताः अनन्तसंहिता - परसंहिता - ज्ञानसंहिता - जयसंहित। - वीरसंहिता - सत्यसंहिता - ज्ञानसंहिता (?) भिधानाः सप्तग्रन्था., अत्रिणा अष्टाशीतिसहस्रग्रन्थयुताः पाद्मतन्त्र - उत्तरतन्त्र - विष्णुतन्त्र -

48. विमा. १०१ पृ ५२१,२

49 आ १७. ३७ - ४९ ab

50 अत्रत्य अङ्गिर शब्द मरीचिपरतया स्वीकरणीय ।

आत्रेयतन्त्रभिधा· चत्वारो ग्रन्था·, भृगुणा चतुष्षष्टिसहस्रग्रन्थमिताः खिल - खिलाधिकार - पुरातन्त्र - वासाधिकार - चित्राधिकार - क्रियाधिकार - मानाधिकार - प्रतिगृह्याधिकारसंज्ञका· अष्टौ ग्रन्था·; काश्यपेन षोडशसहस्रग्रन्थोपेताः सांतानकाण्ड - काश्यपकाण्ड - सत्यकाण्ड - तर्ककाण्ड - ज्ञानकाण्ड - पञ्चकाण्डा(?)भिख्याः षड् ग्रन्थाः कृता इति निर्दिश्यते[51]।

अद्याप्यमुद्रिते भृगुप्रोक्ते ***वासधिकारे*** परं -

अङ्गिर· (मरीचि) प्रोक्ता एकलक्षग्रन्थयुताः - जयसंहिता - आनन्दसंहिता - संज्ञानसंहिता - वीरसंहिता - विजयसंहिता - विजितसंहिता - सत्यसंहिता - ज्ञानसंहिताभिधानाः अष्टौ ग्रन्था·, अत्रिप्रोक्ताः अष्टाशीतिसहस्रग्रन्थयुताः उत्तरतन्त्र - विष्णुतन्त्र - आत्रेयतन्त्र - पूर्वतन्त्रनामानः चत्वारो ग्रन्था·; भृगुप्रोक्ताः चतुष्षष्टिसहस्रग्रन्थयुताः खिल - खिलाधिकार - पुरातन्त्र - वासाधिकार - चित्राधिकार - क्रियाधिकार - मानाधिकार - प्रतिग्रहाधिकारसंज्ञका· अष्टौ ग्रन्था., काश्यपप्रोक्ता· चतुःषष्टिसहस्रग्रन्थोपेताः सान्तानकाण्ड - काश्यपकाण्ड - सत्यकाण्ड - तर्ककाण्ड - ज्ञानकाण्डनामानः पञ्चग्रन्था· परिगण्यन्ते[52]।

भृगुप्रोक्ते ***यज्ञाधिकारे*** तु -

मरीचिप्रोक्तेषु वैखानसग्रन्थेषु एकलक्षं ग्रन्थाः; अत्रिप्रोक्तेषु वैखानसग्रन्थेषु पञ्चविंशतिसहस्रं ग्रन्थाः; भृगुप्रोक्तेषु वैखानसग्रन्थेषु पञ्चाशत्सहस्रग्रन्थाः; काश्यपप्रोक्तेषु वैखानसग्रन्थेषु पञ्चशताधिकद्वादशसहस्रं ग्रन्थाः सन्तीति निर्दिश्यते[53]।

---

51 स अनु (क) २६ - ३३

52 वा १.१४० - ५१

53 य ५१ १४ - २९ ab

मरीचिप्रोक्तेषु खिलप्रभृतिषु खिले क्रियाधिकारे पुरातन्त्रे अर्चाधिकारे वासाधिकारे मानाधिकारे यज्ञाधिकारे प्रकीर्णाधिकारे निरुक्ताधिकारे वर्णाधिकारे च प्रत्येकम् अष्टसहस्रं ग्रन्थाः विमानार्चनसंज्ञके उत्तरतन्त्रे विंशतिसहस्रं ग्रन्था. इत्येवमाहत्य एकादशसु मरीचिप्रोक्तेषु वैखानसग्रन्थेषु एकलक्षं ग्रन्था भवन्ति इति निर्दिश्यते।

अत्रिप्रोक्ता· अर्चाधिकार - वासाधिकार - यज्ञाधिकार - खिलाधिकार - निरुक्ताधिकार - समूर्तार्चनाख्योत्तरतन्त्राभिधा· षड्ग्रन्था. निर्दिश्यन्ते। अत्र अर्चाधिकार - वासाधिकार - यज्ञाधिकाराः प्रत्येकं चतु·सहस्रग्रन्थयुता·, खिलाधिकारः पञ्चसहस्रग्रन्थयुतः, निरुक्ताधिकारः द्विसहस्रग्रन्थयुतः समूर्तार्चाधिकाराख्यमुत्तरतन्त्रं षट्सहस्रग्रन्थात्मकमिति चोच्यते। एतदनुरोधेन अत्रिप्रोक्तानां षण्णामपि ग्रन्थानाम् आहत्य पञ्चविंशतिसहस्रं ग्रन्थसंख्या संपद्यते।

भृगुप्रोक्तेषु खिलप्रभृतिषु एकादशसंख्याकेषु ग्रन्थेषु खिल - पुरातन्त्र - मानाधिकार - अर्चनाधिकारसंज्ञाश्चत्वारो ग्रन्था पृथक् पृथक् षट्सहस्रग्रन्थोपेताः वर्णाधिकार - निरुक्ताधिकार - प्रकीर्णाधिकारसंज्ञकास्त्रयो ग्रन्थाः प्रत्येकं द्विसहस्रग्रन्थयुताः, यज्ञाधिकार· त्रिसहस्रग्रन्थयुत , वासाधिकारः चतुःसहस्रग्रन्थोपेतः, क्रियाधिकारो नवसहस्रग्रन्थयुतः, उत्तरतन्त्रं चतुःसहस्रग्रन्थोपेतं चेत्याहत्य भृगुप्रोक्तेषु एकादशसु ग्रन्थेषु आहत्य पञ्चाशत्सहस्रं ग्रन्था भवन्ति।

काश्यपप्रोक्तेषु अर्चाधिकार - वासाधिकार - खिलसंज्ञकेषु त्रिषु ग्रन्थेषु प्रत्येकं द्विसहस्रं ग्रन्थाः; क्रियाधिकारे पञ्चशताधिकद्विसहस्रग्रन्थाः; उत्तरकल्पे चतुःसहस्रग्रन्थाः इत्येवमाहत्य पञ्चसु वैखानसग्रन्थेषु पञ्चशताधिकद्वादशसहस्रग्रन्थाः भवन्ति।

## मरीच्यादिभिः प्रोक्ताः वैखानसग्रन्थाः तद्गतग्रन्थसंख्या च

### *1. मरीचिप्रोक्ताः वैखानसग्रन्थाः तद्गतग्रन्थसंख्या च*

| विमानार्चनाकल्पानुरोधेन | | आनन्दसंहितानुरोधेन | | समूर्तार्चनाधिकरणानुरोधेन | | वासाधिकारानुरोधेन | | यज्ञाधिकारानुरोधेन | |
|---|---|---|---|---|---|---|---|---|---|
| ग्रन्थाः | ग्रन्थगत ग्रन्थ-संख्या | ग्रन्था | ग्रन्थगत ग्रन्थ-संख्या | ग्रन्था· | ग्रन्थगत ग्रन्थ-संख्या | ग्रन्था | ग्रन्थगत ग्रन्थ-संख्या | ग्रन्था. | ग्रन्थगत ग्रन्थ-संख्या |
| 1. जयसंहिता | चतुरशीतिसहस्रोत्तरैकलक्षग्रन्था | 1 जयसहिता | चतुरशीतिसहस्रोत्तरैकलक्षग्रन्था | 1. जयसंहिता | एकलक्षग्रन्था | 1. जयसहिता | एकलक्षग्रन्था | 1. खिल- | 8,000 |
| 2. आनन्दसहिता | | 2. आनन्दसंहिता | | 2. आनन्दसंहिता | | 2. आनन्दसंहिता | | 2 क्रियाधिकार- | 8,000 |
| 3. सज्ञानसंहिता | | 3. संज्ञानसहिता | | 3. ज्ञानसंहिता | | 3. संज्ञानसंहिता | | 3. पुरातन्त्र- | 8,000 |
| 4 वीरसंहिता | | 4. वीरसंहिता | | 4 वीरसहिता | | 4. वीरसंहिता | | 4. अर्चनाधिकार- | 8,000 |
| 5. विजयसंहिता | | 5. विजयसहिता | | 5. परसंहिता | | 5. विजयसहिता | | 5. वासाधिकार- | 8,000 |
| 6. विजितसंहिता | | 6. विजितसंहिता | | 6. सत्यसंहिता | | 6. विजितसंहिता | | 6. मानाधिकार- | 8,000 |
| 7. विमलसहिता | | 7. विमलसंहिता | | 7. ज्ञानसंहिता | | 7. सत्यसंहिता | | 7. यज्ञाधिकार- | 8,000 |
| 8. ज्ञानसंहिता | | 8. कल्पसहिता | | | | 8. ज्ञानसंहिता | | 8. प्रकीर्णाधिकार- | 8,000 |
| | | | | | | | | 9. निरुक्ताधिकार- | 8,000 |
| | | | | | | | | 10. वर्णाधिकार- | 8,000 |
| | | | | | | | | 11. विमानार्चना-कल्पाख्योत्तर-तन्त्र- | 20,000 |

## 2. अत्रिप्रोक्ता: वैखानसग्रन्था: तद्गतग्रन्थसंख्या च

| विमानार्चनाकल्पानुरोधेन | | आनन्दसंहितानुरोधेन | | समूर्तार्चनाधिकरणानुरोधेन | | वासाधिकारानुरोधेन | | यज्ञाधिकारानुरोधेन | |
|---|---|---|---|---|---|---|---|---|---|
| ग्रन्था: | ग्रन्थगत ग्रन्थ-संख्या | ग्रन्था· | ग्रन्थगत ग्रन्थ-संख्या | ग्रन्था. | ग्रन्थगत ग्रन्थ-संख्या | ग्रन्था. | ग्रन्थगत ग्रन्थ-संख्या | ग्रन्था | ग्रन्थगत ग्रन्थ-सख्या |
| 1 पूर्वतन्त्र- | अष्टाशीतिसहस्रग्रन्था: | 1. पूर्वतन्त्र- | अष्टाशीतिसहस्रग्रन्था: | 1. पाद्यतन्त्र- | अष्टाशीतिसहस्रग्रन्था: | 1 पूर्वतन्त्र- | अष्टाशीतिसहस्रग्रन्था: | 1. अधिकार- | 4,000 |
| 2 आत्रेयतन्त्र- | | 2 महातन्त्र- | | 2. आत्रेयतन्त्र- | | 2 आत्रेयतन्त्र- | | 2. वासाधिकार- | 4,000 |
| 3. विष्णुतन्त्र- | | 3. विष्णुतन्त्र- | | 3 विष्णुतन्त्र- | | 3. विष्णुतन्त्र- | | 3 यज्ञाधिकार- | 4,000 |
| 4. उत्तरतन्त्र- | | 4. उत्तरतन्त्र- | | 4. उत्तरतन्त्र- | | 4. उत्तरतन्त्र- | | 4 खिलाधिकार- | 5,000 |
| | | | | | | | | 5 निरुक्ताधिकार- | 2,000 |
| | | | | | | | | 6. समूर्तार्चनाधिकाराख्योन्तरतन्त्र- | 6,000 |

| 3. भृगुप्रोक्ताः वैखानसग्रन्थाः तद्गतग्रन्थसंख्या च | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| विमानार्चनाकल्पानुरोधेन | | आनन्दसंहितानुरोधेन | | समूर्तार्चनाधिकरणानुरोधेन | | वासाधिकारानुरोधेन | | यज्ञाधिकारानुरोधेन | |
| ग्रन्था | ग्रन्थगत ग्रन्थ-सख्या | ग्रन्था. | ग्रन्थगत ग्रन्थ-संख्या | ग्रन्था. | ग्रन्थगत ग्रन्थ-संख्या | ग्रन्था | ग्रन्थगत ग्रन्थ-संख्या | ग्रन्था. | ग्रन्थगत ग्रन्थ-सख्या |
| 1 खिल- | अष्टाशीतिसहस्रग्रन्थ | 1 खिल- | चतुष्षष्ठिसहस्रग्रन्थ | 1. खिल- | चतुष्षष्ठिसहस्रग्रन्थ | 1 खिल- | चतुष्षष्ठिसहस्रग्रन्थ | 1 खिल- | 6,000 |
| 2. पुरातन्त्र- | | 2. पुराधिकार- | | 2 पुरातन्त्र- | | 2. पुरातन्त्र- | | 2. पुरातन्त्र- | 6,000 |
| 3. वासाधिकार- | | 3 वासाधिकार- | | 3. वासाधिकार- | | 3 वासाधिकार- | | 3. वासाधिकार- | 4,000 |
| 4 चित्राधिकार- | | 4. मानाधिकार- | | 4. चित्राधिकार- | | 4. चित्राधिकार- | | 4. मानाधिकार- | 6,000 |
| 5 मानाधिकार- | | 5 क्रियाधिकार- | | 5. मानाधिकार- | | 5. मानाधिकार- | | 5. क्रियाधिकार- | 9,000 |
| 6. क्रियाधिकार- | | 6 अर्चाधिकार- | | 6. क्रियाधिकार- | | 6. क्रियाधिकार- | | 6. अर्चनाधिकार- | 6,000 |
| 7 अर्चाधिकार- | | 7. यज्ञाधिकार- | | 7. प्रतिगृह्याधिकार- | | 7 प्रतिगृह्याधिकार- | | 7. यज्ञाधिकार- | 3,000 |
| 8. यज्ञाधिकार- | | 8. प्रकीर्णाधिकार- | | 8. खिलाधिकार- | | 8. खिलाधिकार- | | 8. वर्णाधिकार- | 2,000 |
| 9. वर्णाधिकार- | | 9. निरुक्ताधिकार- | | | | | | 9. प्रकीर्णाधिकार- | 2,000 |
| 10. प्रकीर्णाधिकार | | 10.खिलाधिकार- | | | | | | 10. निरुक्ताधिकार- | 2,000 |
| 11 प्रतिगृह्याधिकार | | | | | | | | 11 उत्तरतन्त्र- | 4,000 |
| 12. निरुक्ताधिकार | | | | | | | | | |
| 13. खिलाधिकार- | | | | | | | | | |

| 4. काश्यपप्रोक्ताः वैखानसग्रन्थाः तद्गतग्रन्थसंख्या च | | | | |
|---|---|---|---|---|
| विमानार्चनाकल्पानुरोधेन | आनन्दसंहितानुरोधेन | समूर्तार्चनाधिकरणानुरोधेन | वासाधिकारानुरोधेन | यज्ञाधिकारानुरोधेन |
| ग्रन्था / ग्रन्थगत ग्रन्थ-संख्या | ग्रन्थाः / ग्रन्थगत ग्रन्थ-संख्या | ग्रन्थाः / ग्रन्थगत ग्रन्थ-संख्या | ग्रन्थाः / ग्रन्थगत ग्रन्थ-संख्या | ग्रन्था / ग्रन्थगत ग्रन्थ-संख्या |
| 1. सत्यकाण्ड-<br>2 तर्ककाण्ड-<br>3. ज्ञानकाण्ड-<br>षष्टिसहस्रग्रन्था | 1. सत्यकाण्ड-<br>2. कर्मकाण्ड-<br>3. ज्ञानकाण्ड-<br>षष्टिसहस्रग्रन्था | 1. सत्यकाण्ड-<br>2. तर्ककाण्ड-<br>3. ज्ञानकाण्ड-<br>4. सान्तानकाण्ड-<br>5 काश्यपकाण्ड-<br>6. पञ्चकाण्ड-<br>षोडशसहस्रग्रन्था | 1. सत्यकाण्ड-<br>2. तर्ककाण्ड-<br>3. ज्ञानकाण्ड-<br>4. सान्तानकाण्ड-<br>5. काश्यपकाण्ड-<br>षष्टिसहस्रग्रन्था | 1. अर्चाधिकार- 2,000<br>2. वासाधिकार- 2,000<br>3. खिल- 2,000<br>4. क्रियाधिकार- 2,000<br>5 उत्तरकल्प- 4,000 |

एतेषु मरीचिप्रभृतिभि· प्रोक्तेषु विमानार्चनाकल्पादिषु ग्रन्थेषु वैखानसग्रन्थ - ग्रन्थसंख्यापरिगणनपरेषु प्रकरणेषु सूक्ष्मेक्षिकया प.रशीलितेषु सत्सु विमानार्चनाकल्पादिग्रन्थप्रवक्तॄणां वैखानसग्रन्थानां नाम्नि, संज्ञायां, ग्रन्थसंख्याया च ऐकमत्यं नावभासते। तदत्र परिशील्यते -

मरीचिप्रोक्तानां जयसंहितादीनां वैखानसग्रन्थानां संज्ञायां विमानार्चनाकल्प - आनन्दसंहिता - समूर्तार्चनाधिकरण - वासाधिकार - यज्ञाधिकाराणां परस्परं विवादो दृश्यते। तथा हि -

विमानार्चनाकल्पे परिगणितानां मरीचिप्रोक्तानां जयसंहिताप्रभृतीनाम् अष्टानां ग्रन्थानां द्वितीयस्य आनन्दसंहिताख्यस्य, पञ्चमस्य विजयसंहिताख्यस्य, षष्ठस्य विजितसंहिताख्यस्य च स्थाने समूर्तार्चनाधिकरणे क्रमेण अनन्तसंहिता - परसंहिता - सत्यसंहिताख्याः वैखानसग्रन्थाः परिगण्यन्ते; विमानार्चनाकल्पे परिगणितस्य सप्तमस्य विमलसंहिताख्यस्य स्थाने वासाधिकारे सत्यसंहिताख्यो निर्दिश्यते; विमानार्चनाकल्पे परिगणितस्य वैखानसग्रन्थस्य 'ज्ञानसंहिता' ख्यस्य स्थाने आनन्दसंहितायां 'कल्पसंहिता' ख्यो ग्रन्थो निर्दिश्यते; समूर्तार्चनाधिकरणे ज्ञानसंहिता द्विः परिगण्यते। तयोः प्रथमः ज्ञानसंहिताख्यो ग्रन्थः विमानार्चनाकल्प - आनन्दसंहिता-वासाधिकारेषु ग्रन्थानुक्रमण्यां परिगण्यमान· संज्ञानसंहिताख्यो ग्रन्थ· स्यादित्यभ्यूह्यते, ज्ञानसंहितायाः पौनरुक्त्यात् । यज्ञाधिकारे परं मरीचिप्रोक्तानां विमानार्चनाकल्पे निर्दिष्टानां जयसंहिता - आनन्दसंहिता - संज्ञानसंहिता - वीरसंहिता - विजयसंहिता - विजितसंहिता - विमलसंहिता - ज्ञानसंहिताख्यानाम् अष्टानां वैखानसग्रन्थानां स्थाने खिल -क्रियाधिकार - पुरातन्त्र - अर्चनाधिकार - वासाधिकार - मानाधिकार - यज्ञाधिकार - प्रकीर्णाधिकार - निरुक्ताधिकार - वर्णाधिकार - विमानार्चनाकल्पाख्यो-त्तरतन्त्राभिधाः एकादशग्रन्थाः निर्दिश्यन्ते।

इत्थं मरीचिप्रोक्तानां वैखानसग्रन्थानां संज्ञायां विमानार्चनाकल्पप्रभृतीनां

ग्रन्थानां नास्त्यैकमत्यमिति सुस्पष्टमेतत्।

एवमेव मरीचिप्रोक्तवैखानसग्रन्थसंख्यायां विमानार्चनाकल्प - आनन्दसंहिता - वासाधिकारणां मिथ· संवादो दृश्यते चेत् समूर्तार्चनाधिकरणयज्ञाधिकारयोर्विवादो दृश्यते। तथा हि -

विमानार्चनाकल्प - आनन्दसंहिता - वासाधिकाराः मरीचिप्रोक्ता· वैखानसग्रन्थाः अष्टौ इति निर्दिशन्तः वैखानसग्रन्थसंख्यायां मिथ· साम्यं वहन्ति। मरीचिप्रोक्ताः वैखानसग्रन्थाः सप्त इति निर्दिशत् समूर्तार्चनाधिकरणं, मरीचिप्रोक्ताः वैखानसग्रन्थाः एकादश इति निर्दिशन् यज्ञाधिकारश्च मरीचिप्रोक्तवैखानसग्रन्थसंख्यायां विवदेते।

इत्थं मरीचिप्रोक्तानां वैखानसग्रन्थानां संख्यायां विमानार्चना-कल्पप्रभृतीनां ग्रन्थानां नास्त्यैकमत्यमिति व्यक्तमेव।

तदित्थं विमानार्चनाकल्प - आनन्दसंहिता - समूर्तार्चनाधिकरण - वासाधिकार - यज्ञाधिकाराणां परिशीलनेन मरीचिप्रोक्ता. जयसंहिता - आनन्दसंहिता - संज्ञानसंहिता - वीरसंहिता - विजयसंहिता - विजितसंहिता - विमलसंहिता - ज्ञानसंहिता - कल्पसंहिता - अनन्तसंहिता - परसंहिता - सत्यसंहिता - खिल - क्रियाधिकार - पुरातन्त्र - अर्चनाधिकार - वासाधिकार - मानाधिकार - यज्ञाधिकार - प्रकीर्णाधिकार - निरुक्ताधिकार - वर्णाधिकार - विमानार्चनाकल्पाख्योत्तरतन्त्राभिधा· त्रयोविंशतिग्रन्था· प्रचुरप्रचाराः आसन्नित्यनुमीयते।

किं च मरीचिप्रोक्तवैखानसग्रन्थगतग्रन्थसंख्या चतुरशीत्यधि-कैकलक्षमिति विमानार्चनाकल्पे आनन्दसंहितायां च निर्दिश्यते चेत् समूर्तार्चनाधिकरणे वासाधिकारे यज्ञाधिकारे च मरीचिप्रोक्तवैखानसग्रन्थ-गतग्रन्थसंख्या एकलक्षमिति कथ्यते। तथा च मरीचिप्रोक्तवैखानसग्रन्थगतग्रन्थ-संख्यायां विमानार्चनाकल्पप्रभृतीनां वैखानसग्रन्थानां मतभेद· स्फुट एवास्ते।

तदित्थं मरीचिप्रोक्तानां वैखानसग्रन्थानां संज्ञायां, संख्यायां ग्रन्थसंख्यायां च ऐकमत्यं नास्ति।

अत्रिप्रोक्तानां पूर्वतन्त्रादीनां वैखानसग्रन्थानां संज्ञायां यद्यपि विमानार्चनाकल्प - वासाधिकारयोर्नास्ति विवादः तथापि आनन्दसंहिता - समूर्तार्चनाधिकरण - यज्ञाधिकारणां विवादो दृश्यते। तथा हि -

विमानार्चनाकल्पः वासाधिकारश्च पूर्वतन्त्र - आत्रेयतन्त्र - विष्णुतन्त्र - उत्तरतन्त्राख्याश्चत्वारो ग्रन्थाः अत्रिणा प्रोक्ता इति निर्दिशति। किंतु विमानार्चनाकल्पे वासाधिकारे च निर्दिष्टानाम् अत्रिप्रोक्तानां चतुर्णां ग्रन्थानां द्वितीयस्य आत्रेयतन्त्रस्य स्थाने आनन्दसंहितायां महातन्त्रमिति निर्दिश्यते; विमानार्चनाकल्पे वासाधिकारे च अत्रिप्रोक्तानां चतुर्णां ग्रन्थानां प्रथमस्य पूर्वतन्त्रस्य स्थाने समूर्तार्चनाधिकरणे पाद्मतन्त्रमिति निर्दिश्यते; विमानार्चनाकल्पे वासाधिकारे च निर्दिष्टानाम् अत्रिप्रोक्तानां पूर्वतन्त्र - आत्रेयतन्त्र - विष्णुतन्त्र - उत्तरतन्त्रसंज्ञकानां वैखानसग्रन्थानां स्थाने यज्ञाधिकारे अर्चाधिकार - वासाधिकार - यज्ञाधिकार - खिलाधिकार - निरुक्ताधिकार - समूर्तार्चनाधिकरणाख्योत्तर- तन्त्राभिधा· षट् वैखानसग्रन्थाः परिगण्यन्ते।

तथा च अत्रिप्रोक्तानां वैखानसग्रन्थानां संज्ञायां विमानार्चनाकल्प - वासाधिकाराभ्याम् आनन्दसंहिता - समूर्तार्चनाधिकरण - यज्ञाधिकाराणां दृश्यते विवादः।

अत्रिप्रोक्तवैखानसग्रन्थसंख्यायां विमानार्चनाकल्प - आनन्दसंहिता - समूर्तार्चनाधिकरण - वासाधिकाराणां नास्ति विवादः, ग्रन्थसंख्यायाः चतुष्ट्वेन निर्देशात् ; अत्रिप्रोक्ताः वैखानसग्रन्थाः षडिति परिगणयतो यज्ञाधिकारस्य परं विमानार्चनाकल्प - आनन्दसंहिता - समूर्तार्चनाधिकरण - वासाधिकारैः सह अत्रिप्रोक्तवैखानसग्रन्थसंख्यायां दृश्यते विवादः।

तदित्थं विमानार्चनाकल्प - वासाधिकार - आनन्दसंहिता -

समूर्तार्चनाधिकरण - यज्ञाधिकाराणां परिशीलनेन अत्रिप्रोक्ताः वैखानसग्रन्थाः पूर्वतन्त्र/पाद्मतन्त्र - आत्रेयतन्त्र/महातन्त्र - विष्णुतन्त्र - उत्तरतन्त्र - अर्चाधिकार - वासाधिकार - यज्ञाधिकार - खिलाधिकार - निरुक्ताधिकार - समूर्तार्चनाख्योत्तरतन्त्रसंज्ञकाः दश प्रथिताः स्युरित्यनुमातुं शक्यते।

अत्रिप्रोक्तानां पूर्वतन्त्र/पाद्मतन्त्र - आत्रेयतन्त्र/महातन्त्र - विष्णुतन्त्र - उत्तरतन्त्राणां चतुर्णां वैखानसग्रन्थानां ग्रन्थसंख्यायां विमानार्चनाकल्प - आनन्दसंहिता - समूर्तार्चनाधिकरण - वासाधिकाराणां नास्ति विवादः, ग्रन्थगतग्रन्थसंख्यायाः अष्टाशीतिसहस्रत्वेन निर्देशात्। यज्ञाधिकारस्य परम् अर्चाधिकार - वासाधिकार - यज्ञाधिकार - खिलाधिकार - निरुक्ताधिकार - समूर्तार्चनाख्योत्तरसंज्ञकेषु षट्सु वैखानसग्रन्थेषु आहत्य पञ्चविंशतिसहस्रग्रन्था सन्तीति कथनात् अत्रिप्रोक्तग्रन्थगतग्रन्थसंख्यायां विमानार्चनाकल्पप्रभृतिभिः चतुर्भिर्ग्रन्थैः सह विवादः संपद्यते।

तदित्थम् अत्रिप्रोक्तानां वैखानसग्रन्थानां सज्ञायां संख्यायां ग्रन्थसंख्यायां च मतैक्यं नावभासते।

भृगुप्रोक्तानां खिलप्रभृतीनां वैखानसग्रन्थानां संज्ञायां विमानार्चनाकल्प - आनन्दसंहिता - समूर्तार्चनाधिकरण - वासाधिकार - यज्ञाधिकाराणामस्ति विवादः। तथा हि -

विमानार्चनाकल्पे भृगुप्रोक्ताः खिल - पुरातन्त्र - वासाधिकार - चित्राधिकार - मानाधिकार - क्रियाधिकार - अर्चाधिकार - यज्ञाधिकार - वर्णाधिकार - प्रकीर्णाधिकार - प्रतिगृह्याधिकार - निरुक्ताधिकार - खिलाधिकाराख्याः वैखानसग्रन्थाः परिगण्यन्ते; तेषु चित्राधिकार - वर्णाधिकार - प्रतिगृह्याधिकाराख्यान् ग्रन्थान् विहाय खिलप्रभृतयः अन्ये वैखानसग्रन्था आनन्दसंहितायां परिगण्यन्ते। विमानार्चनाकल्पे निर्दिष्टेषु त्रयोदश वैखानसग्रन्थेषु अर्चाधिकार - यज्ञाधिकार - वर्णाधिकार - प्रकीर्णाधिकार -

निरुक्ताधिकाराभिधान् वैखानसग्रन्थान् विहाय खिलप्रभृतयो ग्रन्थाः समूर्तार्चनाधिकरणे वासाधिकारे च परिगण्यन्ते; विमानार्चनाकल्पे निर्दिष्टेषु पूर्वोक्तेषु त्रयोदशवैखानसग्रन्थेषु चित्राधिकार - प्रतिगृह्याधिकार - खिलाधिकाराख्यान् ग्रन्थान् अपहाय खिलप्रभृतयो उत्तरतन्त्राभिधश्चेति वैखानसग्रन्था· यज्ञाधिकारे परिगण्यन्ते।

तथा च भृगुप्रोक्तानां वैखानसग्रन्थानां संज्ञायां विमानार्चनाकल्पप्रभृतीनां पञ्चानां ग्रन्थानां विवादो दृश्यते।

एवमेव भृगुप्रोक्तानां वैखानसग्रन्थसंख्यायां विमानार्चनाकल्प - आनन्दसंहिता - यज्ञाधिकाराणां विवादो दृश्यते चेत् समूर्तार्चनाधिकरण - वासाधिकारयो· मिथः संवादो दृश्यते। तथा हि -

भृगुप्रोक्ताः वैखानसग्रन्था· त्रयोदश इति निर्दिशन् विमानार्चनाकल्प·, भृगुप्रोक्ता· त्रैखानसग्रन्था दश इति निर्दिशती आनन्दसंहिता, भृगुप्रोक्ताः वैखानसग्रन्थाः एकादश इति निर्दिशन् यज्ञाधिकारश्च भृगुप्रोक्त-वैखानसग्रन्थसंख्यायां विवदन्ते। भृगुप्रोक्ताः वैखानसग्रन्थाः अष्टौ इति निर्दिशन्तौ समूर्तार्चनाधिकरण - वासाधिकारौ वैखानसग्रन्थसंख्यायां साम्यं वहत·।

इत्थं भृगुप्रोक्तानां वैखानसग्रन्थानां संख्यायां समूर्तार्चनाधिकरण - वासाधिकाराभ्यां विमानार्चकल्प - आनन्दसंहिता - यज्ञाधिकारणां दृश्यते विवादः।

तदित्थं विमानार्चनाकल्प - आनन्दसंहिता - समूर्तार्चनाधिकरण - वासाधिकार - यज्ञाधिकारणां परिशीलनेन भृगुप्रोक्ताः खिल - पुरातन्त्र/ पुराधिकार - वासाधिकार - चित्राधिकार - मानाधिकार - क्रियाधिकार - अर्चाधिकार - यज्ञाधिकार - वर्णाधिकार - प्रकीर्णाधिकार - प्रतिगृह्याधिकार - निरुक्ताधिकार - खिलाधिकार - उत्तरतन्त्राभिधाः चतुर्दशग्रन्थाः प्रचारे स्युरिति तर्क्यते।

भृगुप्रोक्तवैखानसग्रन्थगतग्रन्थसंख्यायाम् आनन्दसंहिता - समूर्तार्चनाधिकरण - वासाधिकाराणां नास्ति विवादः, ग्रन्थगतग्रन्थसंख्यायाः चतुःषष्टिसहस्रत्वेन निर्देशात्; विमानार्चनाकल्पे भृगुप्रोक्तवैखानस-ग्रन्थगतग्रन्थसंख्या अष्टाशीतिसहस्रत्वेन निर्दिश्यते चेत् यज्ञाधिकारे खिलप्रभृतिषु एकादश वैखानसग्रन्थेषु आहत्य पञ्चाशत्सहस्रग्रन्थसंख्या निर्दिश्यत इति विमानार्चनाकल्प - यज्ञाधिकारयोः आनन्दसहिताप्रभृतिभि त्रिभिः ग्रन्थैः सह विवादो दृश्यते।

तदित्थं भृगुप्रोक्तानां वैखानसग्रन्थानां संज्ञायां संख्यायां ग्रन्थसंख्यायां च ऐकमत्यं नास्ति।

काश्यपप्रोक्तानां वैखानसग्रन्थानां संज्ञायां विमानार्चनाकल्प - आनन्दसंहिता - समूर्तार्चनाधिकरण - वासाधिकार यज्ञाधिकाराणां परस्परं विवादो दृश्यते।

तथाहि -

विमानार्चनाकल्पे काश्यपप्रोक्तत्वेन परिगणितानां सत्यकाण्डादीनां त्रयाणां ग्रन्थानां द्वितीयस्य तर्ककाण्डस्य स्थाने आनन्दसंहितायां कर्मकाण्डाख्यो ग्रन्थः निर्दिश्यते; विमानार्चनाकल्पे परिगणितेभ्य काश्यपप्रोक्तेभ्यः त्रिभ्यो ग्रन्थेभ्यःअतिरिक्ततया संतानकाण्ड - काश्यपकाण्डाख्यौ द्वावन्यौ ग्रन्थौ वासाधिकारे निर्दिश्येते; विमानार्चनाकल्पे परिगणितेभ्यस्त्रिभ्यो ग्रन्थेभ्यः अधिकतया संतानकाण्ड - काश्यपकाण्ड - पञ्चकाण्डाभिधाः त्रयो ग्रन्थाः समूर्तार्चनाधिकरणे परिगण्यन्ते; यज्ञाधिकारे परं विमानार्चनाकल्पप्रभृतिभ्यः ग्रन्थेभ्यः विलक्षणतया अर्चाधिकार - वासाधिकार - खिल - क्रियाधिकार - उत्तरकल्पाभिधाः वैखानसग्रन्थाः परिगण्यन्ते।

तथा च काश्यपप्रोक्तानां वैखानसग्रन्थानां संज्ञायां विमानार्चनाकल्प-प्रभृतीनां पञ्चानां ग्रन्थानां परस्परम् ऐकमत्यं नावभासते।

काश्यपप्रोक्तवैखानसग्रन्थसंख्यायां विमानार्चनाकल्प - आनन्दसंहितयोः नास्ति विवाद , त्रयाणां ग्रन्थानां निर्देशात् । किं तु पञ्च काश्यपप्रोक्तान् वैखानसग्रन्थान् निर्दिशतो· वासाधिकारयज्ञाधिकारयोः षट् काश्यपप्रोक्तान् वैखानसग्रन्थान् निर्दिशतः समूर्तार्चनाधिकरणस्य च विमानार्चनाकल्प - आनन्दसंहिताभ्यां वैखानसग्रन्थसंख्यायां विवादः स्फुट एवास्ते।

तदित्थं विमानार्चनाकल्प - आनन्दसंहिता - समूर्तार्चनाधिकरण - वासाधिकार - यज्ञाधिकाराणां परिशीलनेन काश्यपप्रोक्ताः पूर्वतन्त्र - आत्रेयतन्त्र - विष्णुतन्त्र - उत्तरतन्त्र - महातन्त्र - अर्चाधिकार - वासाधिकार - यज्ञाधिकार - खिलाधिकार - निरुक्ताधिकार - समूर्तार्चनाधिकाराख्योत्तरतन्त्रभिधाः एकादश वैखानसग्रन्था· प्रथिताः स्युरित्यनुमीयते।

काश्यपप्रोक्तानां वैखानसग्रन्थानां ग्रन्थसंख्यायां विमानार्चनाकल्प - आनन्दसंहिता - वासाधिकाराणां नास्ति विवादः, सत्यकाण्डादिवैखानसग्रन्थ-गतग्रन्थसंख्यायाः आहत्य चतुःषष्टिसहस्रत्वेन निर्देशात्। समूर्तार्चनाधिकरणे काश्यपप्रोक्तानां षण्णां वैखानसग्रन्थानां षोडशसहस्रग्रन्था इति परिगण्यते। काश्यपप्रोक्तेषु अर्चाधिकारादिषु पञ्चसु ग्रन्थेषु आहत्य पञ्चशताधिकद्वादशसहस्रं ग्रन्थाः सन्तीति कथयतो यज्ञाधिकारस्य, काश्यपप्रोक्तेषु सत्यकाण्डादिषु ग्रन्थेषु षोडशसहस्रं ग्रन्था· सन्तीति कथयतः समूर्तार्चनाधिकरणस्य च काश्यपप्रोक्त - ग्रन्थगतग्रन्थसंख्यायां विमानार्चनाकल्पप्रभृतिभिः त्रिभिर्ग्रन्थैः सह विवादः स्फुटो भासते।

यद्यप्यद्य उपलभ्यमानेषु विमानार्चनाकल्पप्रभृतिषु वैखानसग्रन्थेषु परिशीलितेषु सत्सु आहत्य जयसंहिताप्रभृतय. एकोनषष्टि· वैखानसग्रन्थाः नाम्ना उपलभ्यन्ते। तथापि अद्य मरीचे. विमानार्चनाकल्प - आनन्दसंहितासंज्ञकौ द्वौ, अत्रेः समूर्तार्चनाधिकरणसंज्ञकः एकः, भृगो· क्रियाधिकार - खिलाधिकार

- प्रकीर्णाधिकार - यज्ञाधिकारसंज्ञकाश्चत्वारो ग्रन्थाः, काश्यपस्य ज्ञानकाण्डसंज्ञकः एकः इत्येवमाहत्य मुद्रिताः अष्टावेव वैखानसग्रन्था उपलभ्यन्ते। भृगोः अर्चनाधिकार - निरुक्ताधिकार - वासाधिकारसंज्ञकाः त्रयो वैखानसग्रन्थाः मातृकारूपेण क्वचिदुपलभ्यन्ते। अन्ये ग्रन्थाः कालवशान्नष्टाः स्युरिति तर्क्यते।

यत्तु डा. राघवप्रसादचौधरीमहोदयै. 'वैखानसागमसाहित्यस्य सूचिक्रमः' इति स्वीये शोधलेखे 'इत्थ सूचिचतुष्टये निर्दिष्टानां वैखानसागमसंहितानां समीक्षणानन्तरं संपूर्णाः संहिताः षष्टिसंख्याकाः इत्यवगतं भवति'[54] इति निर्दिष्टं, तच्चिन्त्यम्।

तत्र काश्यपस्य ज्ञानकाण्डः टि. गौड्रियन् इत्यनेन पाश्चात्यपण्डितेन आङ्ग्लभाषायामनूदितः सन् संस्कृतानभिज्ञानानाम् आगमसिद्धान्तजिज्ञासूनां भारतीयानां विदेशीयानां च आस्तिकानामागमसिद्धान्तावगमन-सौकर्यमुपकल्पयति।

इत्थं विष्णोः विग्रहाराधनमार्गं सविस्तरमुपवर्णयन् वैखानसागमः सर्वथा आस्तिकानामादरणीयो वर्तते।

### 1.7.0. पञ्चरात्रागमः

जगद्धिताय भगवता नारायणेन शाण्डिल्यादिमुनिभ्यः प्रोक्तः नारदादि-विहितप्रचारः वैदिकतान्त्रिकोभयमार्गानुसारी पञ्चरात्रागमः श्रुतिरहस्यमनेकमुपपादयन् महीयते।

### 1.7.1 पञ्चरात्रागमप्रवक्ता

'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्' इत्यादिभिः जयाख्य

---

54. विमर्श Vol 1 Part 1 पृ १६

संहितादिभिर्वचनै. पञ्चरात्रागमो भगवता नारायणेन प्रवर्तित इत्यवगम्यते।

## 1.7.2. पञ्चरात्रसंज्ञाविशेषाः

कालान्तरे च नारद - हयशीर्षादिभिः प्रोक्तः सन् स एव पञ्चरात्रागम· नारदपञ्चरात्रम्, हयशीर्षपञ्चरात्रमित्यादिभि· संज्ञाविशेषैर्व्यवह्रियमाणो दृश्यते। तदुक्तम् -

(i) *न चात्र भगवद्व्यतिरिक्तब्रह्मादिपुरुषकृतांशेषु कारणदोषः संभवति। 'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्' इति स्ववक्तृके शास्त्रे भगवतैव तेषामृषीणां तत्तत्पुण्यानुसारेण नित्येऽपि वेदे सूत्रकाण्डमन्त्रकृत्ववत् संहिताकर्तृत्वस्याधिकारतया समर्पितत्वात्। यथा च व्यासोक्ते महाभारते वैशम्पायनसंहिताभेदः एवमत्रापि न संकटं किचित्*[55]

(ii) *तदिदं तन्त्रं तत्तत्कालेषु तत्तदध्येतृपुरुषबुद्धितारतम्यानुगुणं संग्रहविस्तररूपेण नैस्तैर्महर्षिभि. स्वस्वशिष्येभ्यः कृत-प्रवचनतया तत्तन्नाम्ना व्यपदिश्यमानमपि न परमपुरुषकर्तृकतां व्यभिचरति। न हि काठकादिसमाख्यया वेदस्यापौरुषेयता प्रतिबध्यते। अनितरसाधारणप्रवचनमूलकत्वेनैव समाख्याया उपपत्तेः। यदाह भगवान् जैमिनि 'आख्या प्रवचनात्' इति।*[56]

इति।

पञ्चरात्रं भागवत - सात्त्वत - एकायन - भगवच्छास्त्रशब्दैरपि

---

55 पा.र पृ. ०३

56 देव रामा. अहि उपो पृ ३

व्यवह्रियते । तत्र षड्गुणसंपन्नस्य भगवच्छब्दाभिधेयस्य विष्णोरुपासका भागवताः; तैः परिगृहीतं शास्त्रं भागवतमिति[57], सत् ब्रह्म, सत्त्वं वा, तद्वन्त सत्त्वन्तः ब्रह्मविद· तेषां शास्त्रं सात्त्वतमिति,[58] मोक्षप्राप्तेरेकमात्रोपायत्वात् एकायनमिति,[59] साक्षाद् भगवन्मुखोद्गतत्वात् भगवदर्चनप्रकारप्रतिपादकत्वाच्च भगवच्छास्त्रमिति[60] च व्युत्पत्तिर्विद्वद्भिरुपदर्श्यते।

## 1.7.3. पञ्चरात्रस्य श्रुतिमूलत्वम्

'श्रुतिमूलमिदं शास्त्रं प्रमाणं कल्पसूत्रवत्'[61] इत्यादिना पञ्चरात्रं श्रुतिमूलमिति पञ्चरात्रसंहिताः निर्दिशन्ति । श्रुतिमूलमित्यादिवचनं तु त्रय्यन्तमूलतया एकायनश्रुतिमूलतया च योज्यमिति न्यायपरिशुद्धौ श्रीवेदान्तदेशिका अभिप्रयन्ति । रहस्याम्नायसंज्ञया व्ययवह्रियमाणस्य एकायनस्य वेदमूलत्वं -

महतो वेदवृक्षस्य मूलभूतो महानयम्।
स्कन्धभूता ऋगाद्यास्ते शाखाभूतास्तथा मुने॥

इति पारमेश्वर - पुरुषोत्तमसंहितयोर्वाक्येन[62]

वेदमेकायनं नाम वेदानां शिरसि स्थितम्।
तदर्थकं पाञ्चरात्रं मोक्षदं तत्क्रियावताम्॥
यस्मिन्नेको मोक्षमार्गो वेदे प्रोक्त. सनातनः।

---

57 भाग. स. पृ ९३
58 वर. नि. श्रीविष्णुस पृ. ४६६
59 मोक्षायनाय वै पन्था एतदन्यो न विद्यते।
तस्मादेकायन नाम प्रवदन्ति मनीषिण ॥ ई १.१९
60. एबाइ् कृष्ण ज प्र. पृ ४६
61. विष्व ८ ६ ab
62 पार. १ ७६, पुरु. १ ४

मदाराधनरूपेण तस्मादेकायनं भवेत्॥[63]

इति श्रीप्रश्नसंहितावचनं चाङ्गीकरणीयमास्ते।

मूलस्य जगन्मूलस्य भगवतो वासुदेवस्य वेदः मूलवेद इति, एकमयनं एको मार्गः मोक्षस्य एकायनमिति च मूलवेद - एकायनपदयोरर्थः पञ्चरात्रसंहितासूपपाद्यते।

ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं

चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं

दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां भूतविद्यां

क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यामेतद्भगवोऽध्येमि

इत्यस्मिन् छान्दोग्यवाक्ये (7.1.2) श्रूयमाणमेकायनपदं श्रीशंकराचार्याः नीतिशास्त्रमिति व्याख्यान्ति। एकायनं नीतिशास्त्रमित्येतत् प्रसिद्धिविरुद्धमित्याहुः सुदर्शनाचार्याः। छान्दोग्यवाक्ये ऋग्वेदादेः पृथक्तया पठितम् एकायनपदं ब्राह्मणपरिव्राजकन्यायेन श्रेष्ठतां द्योतयतीति श्रुतप्रकाशिकायां प्रतिपाद्यते। इतिहासपुराणेषु श्रुतिवचनान्येव उपबृंह्यन्ते। इतिहासपुराणेषु उपबृंहितानाम् एकायनशाखावचनानां च श्रुतित्वं दुर्वारमिति एकायनशाखायाः श्रुतित्वे युक्तिं श्रीसुदर्शनाचार्याः श्रुतप्रकाशिकायां प्रदर्शयन्ति[64]। काश्मीरागमप्रामाण्ये एकायनवेदस्यापौरुषेयत्वं प्रमाणितमिति यामुनाचार्यैरागमप्रामाण्ये निर्दिश्यते[65], भोजराजबलदेवाचार्यादिभिः एकायनमधिकृत्य ग्रन्थाः प्रणीता इति पञ्चरात्ररक्षायामुच्यते[66]। परं तु नैते ग्रन्था

63 श्रीप्र २ ३८,९

64. पृ ३३३

65. पृ ७९

66 पृ ५

अधुनोपलभ्यन्ते।

उत्पलाचार्यैः स्पन्दकारिकायां, सुदर्शनाचार्यैः श्रुतप्रकाशिकायां च उदाहृतानि पञ्चरात्रश्रुतिवचनानि, पञ्चरात्रोपनिषद्वचनानि, एकायनवेदवचनानि च अधुना उपलभ्यमानासु जयाख्यादि पञ्चरात्रसंहितासु नोपलभ्यन्ते। तस्मात् उत्पलाचार्यैः निर्दिष्टा पञ्चरात्रश्रुतिः, पञ्चरात्रोपनिषत्, सुदर्शनाचार्यैः कीर्तितः एकायनवेदश्च अध्येतृपरम्पराविच्छेदाद्विलुप्तिं गता वेत्यनुमातव्यं भवति।

वैयाकरणवरेण्यो नागेशः एकायनवेदः काण्वशाखेत्यभिप्रैति[67]। परकालस्वमिनः पुनः यजुर्वेदस्य तापनीयशाखा एव एकायनशाखेति अभिप्रयन्ति।

पञ्चरात्रसंहितावाक्यानां परिशीलनेन परम् एकायनं पञ्चरात्रमित्यनर्थान्तरमिति कथयितुं पार्यते। तथा हि पञ्चरात्रे प्रसिद्धामीश्वरसंहितामवतारयता नारदेनोक्तानि -

शृणुध्वं मुनयः सर्वे वेदमेकायनाभिधम्॥

मोक्षायनाय वै पन्था एतदन्यो न विद्यते।

तस्मादेकायनं नाम प्रवदन्ति मनीषिणः॥

मूलभूतस्तु महतो वेदवृक्षस्य यो महान्।

सद्ब्रह्मवासुदेवाख्यपरतत्त्वैकसंश्रयम्॥

दिव्यैर्बलादिकैर्मन्त्रैः साक्षात्तत्प्रतिपादकैः।

अलंकृतमसंदिग्धमविद्यातिमिरापहम्॥

इत्युक्त्वाऽध्याप्य योगीन्द्रान् संजगादास्य वैभवम्।

... ... ... ...

67 कृष्ण लक्ष्मी उपो पृ. ६

. . .  . . .  . . .  . . .

. . .  . . .  . . .  . . .

विकारवेदाः सर्वत्र देवतान्तरगोचराः ॥

महतो वेदवृक्षस्य मूलभूतो महानयम् ।

स्कन्धभूता ऋगाद्यास्ते शाखाभूताश्च योगिनः ॥

जगन्मूलस्य वेदस्य मूलभूतो महानयम् ।

स्कन्धभूता ऋगाद्यास्ते शाखाभूताश्च योगिनः ॥[68]

इत्येतानि वाक्यानि वासुदेवप्रतिपादकस्य शास्त्रस्य मूलवेदत्वम् एकायनत्वं च सिद्ध्यतीति अवगमयन्ति । एवं च वासुदेवैकप्रतिपादकं पञ्चरात्रमेकायनमित्यभिप्रायः परिणमति ।

### 1.7.4. पञ्चरात्रस्य प्रमाण्यम्

मीमांसकवरेण्याः कुमारिलभट्टपादाः श्रुतिविरुद्धसाङ्ख्यादिदर्शनवत् पञ्चरात्रमपि न प्रमाणमिति -

*यद्वा यान्येतानि त्रयीविद्भिर्न परिगृहीतानि किंचित्तन्मिश्र-*

*धर्मकञ्चुकच्छायापतितानि लोकोपसंग्रहलाभपूजाख्याति-*

*प्रयोजनपराणि त्रयीविपरीतासंबद्धदृष्टशोभादिप्रत्यक्षानुमानो-*

*पमानार्थापत्तिप्राययुक्तिमूलोपनिबद्धानि साङ्ख्ययोगपाञ्चरात्र-*

*पाशुपतशाक्यग्रन्थपरिगृहीतधर्माधर्मनिबन्धनानि विषचिकित्सा-*

*वशीकरणोच्चाटनोन्मादनादिसमर्थकतिपयमन्त्रौषधिकादाचित्क-*

---

68. ई. १ १८, cd -22 ab, २३ cd, ४

*सिद्धिनिदर्शनबलेनाहिंसासत्यवचनदमदानदयादिश्रुतिस्मृतिसंवादि-*
*स्तोकार्थगन्धवासितजीविकाप्रायार्थान्तरोपदेशीनि, यानि च*
*बाह्यतराणि म्लेच्छाचारमिश्रकभोजनाचरणनिबन्धनानि*
*तेषामेवैतच्छ्रुतिविरोधहेतुदर्शनाभ्यामनपेक्षणीयत्वं प्रतिपाद्यते*

इत्यनेन तन्त्रवार्तिकग्रन्थभागेन[69] अभिप्रयन्ति।

इत्थं पञ्चरात्रस्य श्रुतिविरोध - हेतुदर्शनाभ्यामनपेक्षणीयत्वं प्रतिपादयन्तो भट्टाचार्यपादाः श्लोकवार्तिकारम्भे स्वयमेवोक्तस्य

न चात्रातीव कर्तव्यं दोषदृष्टिपरं मन.।
दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ॥

इत्यस्य वाक्यस्य स्वयमेवोदाहरणतां यान्ति,[70] पञ्चरात्रस्य वेदार्थोपबृंहकत्वेन श्रुतिविपरोधाभावात्।

श्रुतिमूलमिदं तन्त्रं प्रमाणं कल्पसूत्रवत्[71]।

इत्यादिना हि पञ्चरात्रं श्रुतिमूलं प्रामाणं चेत्युपस्थाप्यते।

श्रीशंकराचार्या पुन. -[72]

'न जायते म्रियते वा कदाचित्' इत्यादिवाक्यै· जीवस्य नित्यत्वे बोध्यमाने, 'नात्मा श्रुते नित्यत्वाच्च ताभ्य·' इत्यादि सूत्रै· जीवस्योत्पत्तौ निषिध्यमानाया च वासुदेवसंज्ञकात् परमात्मन· संकर्षणसंज्ञको जीवो जायत इति जीवोत्पत्तिं प्रतिपादयत् पञ्चरात्र श्रुतिविरुद्धम्। पञ्चरात्रानुरोधेन वासुदेवसंज्ञकात्

69 १ ३.४
70 दर्श पृ ४९४
71 विष्व ८ ६
72 श भा ब्र सू 2,2,42,43,44,45

ब्रह्मण· संकर्षणसंज्ञकस्य जीवस्योत्पत्तौ अभ्युपगतायां, जीवस्य कार्यता, अनित्यता, स्वकारणे ब्रह्मणि प्रविलयः मोक्षे अनधिकारश्च प्रसज्येत।

किं च संकर्षणसंज्ञकात् जीवात् प्रद्युम्नसंज्ञकं मन· उत्पद्यत इति पञ्चरात्रसिद्धान्त· लोकविरुद्धः, लोके क्वापि कर्तुः करणस्योत्पत्तेरदर्शनात्।

यदि संकर्षणादय जीवादिरूपेण न परिगणनीया· किं तु ईश्यरत्वेनैवेत्युक्त्वा जीवोत्पत्तिनिमित्तकः श्रुतिविरोधदोषः, कर्तुः करणोत्पत्तिप्रयुक्तः लोकविरोधदोषश्च निरवकाश इत्युच्यते, तथापि वासुदेवादीनां चतुर्णामीश्वराङ्गीकारेण ईश्वराणामनेकत्वं संपद्यते। तेन च भगवान् वासुदेव· एक एव परमार्थतत्त्वमिति भवतामेव सिद्धान्तस्य विरोधो भवति।

अपि च पञ्चरात्रे 'चतुर्षु वेदेषु परं श्रोयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रमधीतवान्' इति वाक्ये वेदनिन्दा प्रतीयते। तस्मात् पञ्चरात्रं न प्रमाणम् - इति पञ्चरात्रमधिक्षिपन्ति।

शंकराचार्याणामेतमधिक्षेपं यामुनाचार्यपादाः निराकुर्वन्ति[73] । **तेषामयमभिप्रायः -**

वासुदेव· पराप्रकृतिः परमात्मा, तत. संकर्षणो नाम जीवो जायते, संकर्षणात् प्रद्युम्नसंज्ञं मनो जायते ततो अनिरुद्धनामा अहंकारो जायते इति पञ्चरात्रं निर्दिशति। अस्मिन् वाक्ये प्रयुक्ता. जीवादय· शब्दाः न तन्मात्रं वदन्ति, अपि तु तदधिष्ठातारं विलक्षणं विग्रहरूपिणं भगवन्तमेवाभिदधति। अस्य वाक्यस्य वासुदेव - संकर्षण - प्रद्युम्न - अनिरुद्धसंज्ञकव्यूहरूपेण भगवानभिव्यक्तो भवतीत्यत्रैव तात्पर्यम्, न पुनः जीवाद्युत्पत्तौ। तथा च जीवस्योत्पत्त्रौ कार्यत्वस्य, अनित्यत्वस्य, स्वकारणे प्रविलयस्य, मोक्षे अनधिकारस्य च नास्त्यवकाशः।

---

73. आ प्रा पृ ४७ - ६२

कर्तुः करणस्यासंभवः इत्ययमाक्षेपस्तु श्रुतिसिद्धान्तेऽपि समान एव। अपगतसकलकरणकलापस्वमहिमप्रतिष्ठब्रह्मणः प्राणमन.प्रभृति निखिलकरणानि उत्पद्यन्त इति हि

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च

इत्यनेन श्रुतिवाक्येन प्रतिपाद्यते। तस्मात् कर्तुः करणस्य नोत्पत्तिः इत्याक्षेपः श्रुतावपि समानः सन् पञ्चरात्रमिव श्रुतिमपि अप्रमाणं कल्पयेत्।

संकर्षणादीनां जीवाद्यधिष्ठातृदेवत्वेन परिगणयति पञ्चरात्रे आपादितः अनेकेश्वरवाददोषः न संगच्छते। पञ्चरात्रे वासुदेवः एक एव परा प्रकृतिरिति घोष्यते। संकर्षणादयः पुनः वासुदेवस्यैव लीलया विरचितानि पवन - हर - विरिञ्चादि सदृशानि रूपान्तराणि इति परिगण्यन्ते। तस्मात् वासुदेवस्य लीलाविरचितरूपान्तराणि प्रतिपादयति पञ्चरात्रे अनेकेश्वरवादस्य तन्निमित्तिकाप्रामाण्यस्य च नास्त्यवकाशः।

वेदनिन्दाप्रत्यायकं पञ्चरात्रं न प्रमाणमिति यदुक्तं तदपि न समीचीनम्। 'न हि निन्दा निन्दितुं प्रवर्तते, अपि तु स्तुत्यं स्तोतुम्' इति न्यायेन यथा 'प्रातः प्रातरनृतं ते वदन्ति' इत्यैतरेयब्राह्मणवाक्येन कृता अनुदितहोमनिन्दा उदितहोमप्रशंसार्था, यथा वा-

ऋग्वेदो देवदैवत्यो यजुर्वेदस्तु मानुषः।

सामवेदस्तु पित्र्यः स्यात्तस्मात्तस्याशुचिर्ध्वनिः॥

इति स्मृतिवाक्येन कृता सामवेदनिन्दा इतरवेदप्रशंसार्था, यथा च -

चत्वार एकतो वेदा भारतं चैकमेकतः।

समागतैस्तु ऋषिभिस्तुलयाऽरोपितं पुरा॥

महत्वे च गुरुत्वे च ध्रियमाणं यतोऽधिकम्।

महत्वाच्च गुरुत्वाच्च महाभारतमुच्यते ॥

इति महाभारतवाक्येन कृता वेदनिन्दा महाभारतप्रशंसार्था तथा 'चतुर्षु वेदेषु पुरुषार्थमलभमानः शाण्डिल्य इदं शास्त्रमधीतवान् इति वाक्येन कृता वेदनिन्दा पञ्चरात्रप्रशंसार्था एव भवति न पुनः वेदनिन्दार्था।

इत्थं श्रीशंकराचार्यैः पञ्चरात्रस्याप्रामाण्ये निर्दिष्टा हेतवः न संगच्छन्त इति।

एतदतिरिक्ततया अन्यैः शास्त्रकारैश्च पञ्चरात्रे आपाद्यमानम् अप्रामाण्यं सोपपत्तिं निराकृत्य पञ्चरात्रं सर्वथा प्रमाणमिति यामुनाचार्यपादाः प्रतिष्ठापयामासुः।

यामुनाचार्यपादानां मतमेव श्रीरामानुजाचार्य - वेदान्तदेशिक - भट्टारकवेदोत्तमप्रभृतयः प्रथितयशसो वैष्णवाः पञ्चरात्रप्रामाण्यं निपुणं न्यरूपयन्।

ब्रह्मसूत्रेषु पञ्चरात्राधिकरणेन पञ्चरात्रप्रामाण्यं स्थाप्यत इत्युच्यते चेत् परमतनिराकरणपरे तस्मिन् पादे पञ्चरात्राधिकरणस्य संगतिश्चिन्तनीया संपद्यते। पञ्चरात्रप्रामाण्यनिराकरणं तेनाधिकरणेन क्रियत इत्युच्यते चेत् अधिकरणस्य तस्य पादे संगतिः कथं संभवतीति पूर्वपक्षस्य इमानि समाधानानि—

1. पादान्तर्गतेषु सर्वेष्वधिकरणेषु पादार्थः अनुवर्तनीय इति निर्बन्धो नास्ति, प्रासङ्गिकविवरणस्यापि बहुष्वधिकरणेषु पूर्वमीमांसायां दर्शनात्।

2. पञ्चरात्रं न प्रमाणमिति यन्मतं तत् परमतम्। तस्य निराकरणात् पञ्चरात्राधिकरणस्य पादसंगतिरुपपद्यते।

3. वैदिकमतविरोधित्वाभावः पादार्थः। तत्र साङ्ख्यादिदर्शनानां युक्त्याभासमूलकानां दुर्बलानां वैदिकमतविरोधित्वं नास्ति। दुर्बलस्य प्रबलं प्रति विरोधित्वासंभवात्। पञ्चरात्रस्य तु वैदिकमतानुकूलत्वात् वेदविरोधित्वं

नास्तीति निरूपणात् पादार्थानुगमः।

4. विप्रतिषेधाच्चासमञ्जसम् इति साङ्ख्यदर्शने असामञ्जस्यमुपक्रम्य 'पत्युरसामञ्जस्यात्' इति पशुपतिमते असामञ्जस्यमुपसंहृत्य पञ्चरात्राधिकरणरचनात् असामञ्जस्यं पशुपतिमतपर्यन्तमेव न तु पञ्चरात्रे इति सूत्रकारेण सूच्यते। तस्मात् पञ्चरात्रं प्रमाणम्।

### 1.7.5. पञ्चरात्रस्य प्राचीनता

पञ्चरात्रं कदा प्रादुरभूदित्यस्य प्रश्नस्य समाधाने विमुखाः सांप्रदायिकाः विपश्चितोऽपि पञ्चरात्रं भक्तानुकम्पया भगवता नारायणेनोपदिष्टं वेदा इव अनादिकालप्रवृत्तमिति साधयन्ति। सर्वाभिप्रायानादिवादिनो हि सांप्रदायिकाः। सात्त्वतविध्यपराख्यं पञ्चरात्रं द्वापरयुगस्यान्ते कलियुगस्यादौ संकर्षणेन प्रवर्तितमिति ईश्वरसंहितावचनं[74] पाञ्चरात्रकालनिर्णये विनिगमकं भवति।

आधुनिकाश्च विमर्शकाः पञ्चरात्रकालनिर्णये हेतून् परिशील्य अधोनिर्दिष्टान् स्वविचारानाविष्कुर्वन्ति।

ऋग्वेदीयपुरुषसूक्तसंबद्धमिदं पञ्चरात्रमतिप्राचीनमिति डा. एस्. एन्. दासगुप्तमहोदयैः संभाव्यते[75]। पं.वि.कृष्णमाचार्या अपि ऋग्वेदकालात् प्राचीनोऽयं समयाचार इति कथयन्ति[76]।

पञ्चरात्रगताः तत्त्वविचाराः उपनिषद्भ्यः साङ्ख्ययोगाच्च सन्ति स्वीकृताः इत्यतः पञ्चरात्रम् ऋग्वेदवत् अतिप्राचीनमिति दासगुप्तवचनं न विचारसहम् इति कथयन्तो डा. एस्. आर्. भट्टमहोदयाः पञ्चरात्रकालविचारे

---

74. द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च।
साक्षात् सकर्षणाल्लब्ध्वा वेदमेकायनाभिधम्॥ ई १

75 द्र. भा. द. इ पृ. १२

76. कृष्ण लक्ष्मी उपो. पृ १३

77 Dr S R भट् The Philosophy of Pancaratra पृ 12

स्वमतं न किंचिदुपस्थापयन्ति[77]।

ऐतरेयब्राह्मणे शतपथब्राह्मणे च पञ्चरात्रपरायणानां सात्त्वतानां नामनिर्देशोपलम्भात् अद्योपलभ्यमानेषु ब्राह्मणग्रन्थेषु प्राचीनतमम् ऐतरेयब्राह्मणमिति निःसंशयतया पञ्चरात्रसंप्रदायस्य प्रचारः भारते क्रिस्तोः प्राक् दशमशताब्द्यां ततोऽपि पूर्वं वा आसीदिति डा. एस्. के अय्यङ्गार्महाभागा अभिप्रयन्ति[78]।

'वासुदेवार्जुनाभ्यां वुन्' (4.3.98) इति सूत्रेण वासुदेवे भक्तिरस्य इत्यस्मिन्नर्थे वासुदेवशब्दं व्युत्पादयता पाणिनिना एतत् सूचितं भवति यत् तदानीं वासुदेवभक्ता आसन्निति वासुदेव इति च भगवतः संज्ञेति 'नैषा क्षत्रियाख्या, संज्ञैषा तत्र भवत ' इत्यनेन पतञ्जलिवाक्येन उपोद्बल्यते। अनेन पाणिनिकाले एव वासुदेवाराधका आसन्निति स्वीकृत्य पाणिनिकाले (क्रिस्तोः पूर्वं चतुर्थशतके) एव वासुदेवार्चनपरं पञ्चरात्रम् आसीदिति पञ्चरात्रकालं जिज्ञासमानो विमर्शकवरः आर्. जि. भण्डारकर् महोदय अभिप्रैति[79]।

प्रकारान्तरेणापि क्रिस्तो. प्राक् चतुर्थे शतके वासुदेवः पूज्यते स्मेति च श्रीमन्तो भण्डारकर् महोदया· अभिप्रयन्ति। तथा हि -

क्रिस्तोः प्राक् चतुर्थे शतके मौर्यचन्द्रगुप्ते भुवं शासति सति भारतदेशं समागतो मेगास्तनीस्सञ्ज्ञको चीनादेशवासी स्वीये लेखे 'शौरसेनीयाः केचन क्षत्रिया वासुदेवसमाराधका आसन्' इति कथयति। अत· क्रिस्तोः प्राक् चतुर्थे शतके वासुदेवसमाराधनक्रमबोधकं पञ्चरात्रमासीदिति वक्तुं शक्यत इति श्रीमन्तो भण्डारकर्महोदया लिखन्ति[80]।

शिलालेखप्रमाणप्रदर्शनपुरःसरमपि वासुदेवपूजा, क्रिस्तोः प्रागासीदिति श्रीमद्भि· भण्डारकर्महोदयै· प्रतिपाद्यते।

---

78 द्र Foreword, ज पृ. 15

79. वै शै अ. धा पृ ४

80 Ibid १०

राजस्थानदेशे घोसुण्डिनामके नगरे समुपलब्धे शिलालेखे संकर्षणवासुदेवयोर्मन्दिरं परितः प्राकारो निर्मित इति निर्दिश्यते। अयं च लेख· क्रिस्तोः प्राक् द्वितीयशतकात् प्रागेव लिखितो वर्तते[81]।

बैसनगर इत्यस्मिन् ग्रामे समुपलब्धे शिलालेखे वासुदेवस्य तृप्तये गरुडध्वजस्तम्भ· हेलियोदोराभिधानेन संस्थापित इति लिखितमस्ति। आत्मानं परमभागवत इति निर्दिशन् यवनदूतोऽयं क्रिस्तोः प्राक् द्वितीयशतकस्य प्रथमभागे समागत इति चरित्रकारा· निर्णयन्ति। तस्मात् वासुदेवपूजा क्रिस्तोः प्राक् द्वितीयशतके एव प्रचलति स्म; वासुदेवोपासका· भागवता इति परिगण्यन्ते स्म इति ज्ञातुं शक्यते[82]।

नानाघाटसंज्ञके ग्रामे कस्यांचिद्गुहायामुपलब्धे शिलालेखे संकर्षणवासुदेवशब्दघटितो मङ्गलश्लोकः समुपलभ्यते। अयं च लेखः क्रिस्तोः प्राक् प्रथमशतके विलिखितो वर्तते[83]।

तथा चैतल्लेखत्रयपरिशीलनेन क्रिस्तात् प्राक् तृतीयशतके ततः प्राग्वा वासुदेवसंकर्षणाद्यर्चनं प्रचलति स्मेत्यवगन्तुं शक्यते; तद्द्वारा वासुदेवाद्यर्चनक्रमबोधकं पञ्चरात्रमपि क्रिस्तात् प्राक् तृतीयशतके ततः प्राग्वा प्रचारे आसीदिति तर्कयितुं शक्यते।

क्रमादुपचितत्वेन संभव्यमाने क्रिस्तोः पूर्वं तृतीयशतके लिखितं स्यादिति आलोच्यमाने महाभारते भीष्मपर्वणि मोक्षधर्मपर्वणि च पञ्चरात्रप्रशंसा दृश्यते। तस्मात् महाभारतात् प्राक्तनं पञ्चरात्रं क्रिस्तोः पूर्वं तृतीयशतकात् प्राक्तनं स्यादित्येव वक्तव्यं भवति।

एतेषां परिशीलनेन पञ्चरात्रं क्रिस्तोः प्राक् चतुर्थशतके प्रावर्तत इति वक्तुं

81 Ibid पृ. ३

82 Ibid पृ ३

83 Ibid पृ ४

शक्यते।

### 1.7.6. पञ्चरात्रशब्दनिर्वचनम्

भगवच्छास्त्रमिति प्रसिद्धस्य पञ्चरात्रस्य निर्वचनानि नैकविधानि दृश्यन्ते-

'पञ्चविधानि रात्राणि ज्ञानानि यस्मिंस्तत् पञ्चरात्रम्'[84] इति नारदपञ्चरात्रे पञ्चरात्रशब्दस्य व्युत्पत्तिरुपदर्श्यते। 'वेद - आरण्यक - साङ्ख्य - योगाख्यानि चत्वारि शास्त्राणि परस्पराङ्गतया यस्मिन् शास्त्रे प्रवर्तन्ते तच्छास्त्रं पञ्चविध - ज्ञानसमाहारात् पञ्चरात्रम्[85] इति महाभारतं विवृणोति। साङ्ख्य - योग - वैराग्य - तपो - भक्तीनां पञ्चानाम् अर्थानां प्रदायकं शास्त्रं पञ्चरात्रम्[86] इति[87] शाण्डिल्यसंहिता अभिप्रैति। वेद - वेदान्त - पुराण - साङ्ख्य - योगसंज्ञकानि पञ्च शास्त्राणि यत्र रात्रीयन्ते तत् पञ्चरात्रम्[88] इति पौष्करसंहिता पञ्चरात्रशब्दार्थं निर्वक्ति। साङ्ख्य - योग - वैशेषिक - न्याय - मीमांसाख्यानि पञ्च शास्त्रान्तराणि यत्र रात्रीयन्ते तत् पञ्चरात्रम्[89] इति पाद्म - अनिरुद्ध - विश्वामित्रसंहिता·

84 रात्र च ज्ञानवचन ज्ञान पञ्चविध स्मृतम्।
तेनेद पञ्चरात्र च प्रवदन्ति मनीषिण ॥ ना प. (ज्ञाना) प्र 1 44

85. एवमेक साङ्ख्ययोग वेदारण्यकमेव च।
परस्पराङ्गान्येतानि पाञ्चरात्र च कथ्यते॥ म भा १२. 336 76

86 साङ्ख्य योगश्च वैराग्य तपो भक्तिश्च केशवे।
पञ्चार्थदानत त्राणात् विद्या सा पाञ्चरात्रिकी॥ शा १ ४ ७८

87 Pancaratra Name and Origin - Dr PP Apte, CASS Studies, Number 2

88 पुराण वेदवेदान्त तथान्यत् साङ्ख्ययोगजम्॥
पञ्चप्रकार विज्ञेय यत्र रात्रायतेऽब्जज।
फलोत्कर्षवशेनैव पञ्चरात्रमिति स्मृतम्॥ पौ. ३८ ३०७,८

89 पञ्चेतराणि शास्त्राणि रात्रीयन्ते महान्त्यपि।
तत्सनिधौ समाख्यासौ तेन लोके प्रवर्तते॥
चन्द्रतारागण यद्वच्छोभते नैव वासरे।
तथेतराणि शोभन्ते पञ्च नैवास्य सनिधौ॥

वदन्ति। रात्रिशब्दः अज्ञानार्थक· तन्नाशवाचक पञ्चशब्दः। तस्मादज्ञाननाशकं शास्त्रं पञ्चरात्रम्[90] इति श्रीप्रश्नसहिता निर्दिशति।

'शब्दादयो विषयाः पञ्चभूतानि वा पञ्च रात्रय·, तद्गोचराज्ञाननाशकतेजोरुपं शास्त्रं पञ्चरात्रम्[91]' इति विष्णुसंहिता अभिप्रैति। हयशीर्षसंहिता तु पञ्चभूतानां रात्रित्वमभिप्रेत्य तद्व्यतिरिक्तनिरञ्जनतत्त्वबोधकं शास्त्रं पञ्चरात्रम्[92] इति कथयति। 'पञ्च महाभूतानि पञ्च गुणाश्च देहिनां पञ्च

---

पञ्चत्वमथवा यद्वद्दीप्यमाने ि क्रे।
ऋच्छन्ति रात्रयस्तद्वदितराणि तदान्तिके॥ पाद्म (ज्ञा) १.७२-४
साङ्ख्य योगादिशास्त्राणि रात्रीयन्ते महान्त्यपि॥
तत्संनिधौ समाख्यासौ तेन लोके प्रवर्तते।
चन्द्रतारागण यद्वच्छोभते नैव वासरे॥
तथेतराणि शोभन्ते पञ्च नैवास्य सनिधौ।
पञ्चत्वमथवा यद्वद्दीप्यमाने दिवाकरे॥
ऋच्छन्ति रात्रयस्तद्वदितराणि तदन्तिके।
तस्मात्तु पञ्चरात्राख्य ब्रह्मा लोकपितामह॥ अनि १ ३५ ८
साङ्ख्ययोगादय पञ्च रात्रा (त्री?) यन्तेऽस्य सनिधौ।
तस्माद्वा पञ्चरात्रार्थ प्रोच्यते सूरिसत्तमै॥
अथवा रात्रयो यद्वत् संनिधौ पञ्चताय वै (?)।
नीयन्ते तद्वदन्यानि शास्त्राण्येतस्य सनिधौ॥
इति वा पाञ्चरात्रार्थो विद्वद्भि कथ्यते द्विज। विश्वा २.६-८

90. रात्रिरज्ञानमित्युक्तं पञ्चेत्यज्ञाननाशकम्।
तच्छास्त्र पञ्चरात्र स्यादन्वर्थस्यानुरोधत॥ श्रीप्र. २ ४०

91. रात्रयो गोचरा पञ्च शब्दादिविषयात्मका॥
महाभूतात्मका वात्र पञ्चरात्रमिद तत।
अवाप्य तु पर तेजो यत्रैता पञ्च रात्रय॥
नश्यन्ति पञ्चरात्र तत् सर्वाज्ञानविनाशकम्। वि २ ४९-५१

92 आकाशवायुतेजांसि पानीय वसुधा तथा।
एता वै रात्रय ख्याता ह्यचैतन्यास्तमोत्कटा॥
रात्रीणामप्यथैतासा व्यतिरिक्त निरञ्जनम्।
स यदा बुध्यते तत्त्व तदा मुक्तोऽनुकीर्त्यते॥ ह.(आदि) ४.२,३

रात्रयः तद्भोगविनिवर्तकं शास्त्रं पञ्चरात्रम्'[93] इति परम - कपिञ्जल - विष्णुतन्त्रसंहिता· पञ्चरात्रशब्दं व्युत्पादयन्ति।

'भूतमात्राणि - गर्व - बुद्धि - अव्यक्तानि पुरुषस्य रात्रयः, तद्विवेचकं पञ्चरात्रम्'[94] इति प्रकारान्तरेण परमसंहिता पञ्चरात्रशब्दं निर्वक्ति। 'अव्यक्त - मनो - बुद्धि - अहंकाराः गन्धादितन्मात्राणि च रात्रित्वेन ख्याप्यन्ते, अव्यक्तादिभि. समन्वितस्य शरीरिणः भुक्तिमुक्तिदं शास्त्रं पञ्चरात्रम्[95]'इति भङ्ग्यन्तरेण विष्णुतन्त्रसंहिता पञ्चरात्रशब्दं व्युत्पादयति। 'इन्द्रियाणि - विषयाः - भूतानि - तद्गुणा· पञ्चशब्देन कीर्त्यन्ते । राधातुरादानार्थकः, विषयेन्द्रियभूतानामादातारः पञ्चराः मनुष्याः, तेषां त्रातृशास्त्रं पञ्चरात्रम्[96]' इति

93 महाभूतगुणा पञ्च रात्रयो देहिन स्मृता ॥
तद्योगाद्विनिवृत्तेर्वा पञ्चरात्रमिति स्मृतम्। पर १.३९,४०

94 अथ वक्ष्यामि विप्रेन्द्र पञ्चरात्रार्थमुत्तमम्॥
पृथिव्यादीनि भूतानि गुणा पञ्च महामते।
रात्रयो जन्तव प्रोक्ता सर्वशास्त्रेषु निश्चिता ॥
तद्भोगाद्विनिवृत्तिस्तु पञ्चरात्रमिति स्मृतम्। कपि. १.३१cd - ३ab
वियद्वायुश्च वह्निश्च आपश्चैव धरा तथा।
रात्रयो देहिनां प्रोक्ता अविद्यासभवस्तत ॥
तद्भोगाद्विनिवृत्तिं तु कारयेयुर्यतस्तत ।
पञ्चरात्रमिति प्रोक्तमेतच्छास्त्रमथा (स्त्र मया ?) तथा॥ वि तन्त्र १ ७८,९
भूतमात्राणि गर्वश्च बुद्धिरव्यक्तमेव च॥
रात्रय पुरुषस्योक्ता पञ्चरात्रं तत स्मृतम्। पर. १.४०,१

95 अव्यक्तं च मनो बुद्धिरहकारश्च चित्तकम्।
तन्मात्राश्चैव गन्धाद्या रात्रयो देहिन स्मृता. ॥
एभि समन्वितैर्देहैर्देहिना भुक्तिमुक्तिदम्।
साधन पूजनं त्वेतत् पञ्चरात्रमिति स्मृतम्॥
यतो भूतगुणाः पञ्च रात्रयो देहिन स्मृता ।
तद्भोगाद्विनिवृत्तिं तु कारयेयुर्यतस्तत ॥ वि. तन्त्र. १.८०-२

96. पञ्चेन्द्रियाणि विषया पञ्चभूतानि तद्गुणा ॥
पञ्चशब्दाभिधेयानि विद्वासोऽप्याचचक्षिरे।
रा इत्ययमपि प्रोक्तो धातुरादानवाचक ॥

विश्वामित्रसंहिता विलक्षणतया पञ्चरात्रशब्दार्थं विशदयति।

'ब्रह्मणा सार्धकोटिप्रमाणेन पञ्चसु रात्रिषु केशवाच्छ्रुतं शास्त्रं पञ्चरात्रम्' इति पुरुषोत्तम - मार्कण्डेयसंहिते कथयतः[97]।

'पञ्चायुधानाम् अंशत्वेन परिगण्यमानेभ्यः पञ्चभ्य शाण्डिल्यौपगायन-मौञ्जायनकौशिकभारद्वाजेभ्यः मुनिश्रेष्ठेभ्यः पञ्चभिरहोरात्रैः जगत्प्रभुणा प्रोक्तं शास्त्रं पञ्चरात्रम्' इति ईश्वरसंहिता उपपादयति[98]।

'अनन्तगरुडादिभिः पञ्चभिः पञ्चभिर्दिनैर्गृहीतत्वात् शास्त्रमेतत् पञ्चरात्रम्' इति विहगेन्द्रसंहिता अभिप्रैति[99]।

ब्रह्मरात्र - शिवरात्र - इन्द्ररात्र - नागरात्र - ऋषिरात्रसंज्ञकैः पञ्चभी

---

विषयेन्द्रिय भूतानामादातारश्च पञ्चरा ।
मनुष्या पालनात्तेषा पञ्चरात्रमिति स्मृतम्॥ विश्वा. २.३ cd - ५

97. सार्धकोटिप्रमाणेन ब्रह्मणा केशावाच्छ्रुतम्।
रात्रिभि पञ्चभि सर्वं पञ्चरात्रागम स्मृतम्॥ पुरु. १.
सार्धकोटिप्रमाणेन कथित तस्य विष्णुना।
रात्रिभि पञ्चभि सर्वं पञ्चरात्रमत स्मृतम्॥ मा. १ १९

98. पञ्चायुधाशास्ते पञ्च शाण्डिल्यश्चौपगायन ।
मौञ्ज्यायन. कौशिकश्च भारद्वाजश्च योगिन ॥
.. ... .. .
..
पञ्चापि पृथगैकैकं दिवारात्र जगत्प्रभु ।
अध्यापयामास यतस्तदेतन्मुनिपुगवा ॥
शास्त्र सर्वजनैर्लोके पञ्चरात्रमितीर्यते। ई २१ ५१९,५३२,३

99. आदौ कृतयुगे प्राप्ते केशवेन प्रसादिता ॥
अनन्तो गरुडश्चैव विष्वक्सेन कपालभृत्।
ब्रह्मा इत्येव पञ्चैते शृण्वन्ति पृथगीरितम्॥
अनन्त प्रथमे रात्रौ गरुडश्च द्वितीयके।
तृतीयरात्रौ सेनेशश्चतुर्थे वेधसा श्रुतम्॥
रुद्र पञ्चमरात्रौ च श्रद्धाशास्त्र पृथक्पृथक्। विह. १.३४-७

रात्रैर्विभागैर्युतं शास्त्रं पञ्चरात्रम्' इति भारद्वाजसहितायां निर्दिश्यते[100]।

'सनत्कुमारसंहितानुरोधेन ब्रह्मरात्र - शिवरात्र - इन्द्ररात्र - ऋषिरात्र - बृहस्पतिरात्रसंज्ञकपञ्चविभागोपेतत्वात् शास्त्रस्यास्य पञ्चरात्रमिति संज्ञा प्रथत' इति डा. राघवन्महाशया अभिप्रयन्ति[101]।

'अभिगमन - उपादान - इज्या - स्वाध्याय - योगाख्यानां पञ्चानां भगवदाराधनाङ्गकर्मणामनुष्ठाने कालपञ्चकम् अस्मिन् शास्त्रे प्रतिपाद्यत इति शास्त्रस्यास्य पञ्चरात्रमित्याख्या' इति वेदान्तदेशिका· कथयन्ति[102]।

शतपथब्राह्मणे पञ्चरात्रशब्दः नारायणशब्दश्च श्रूयत इति नारायणेनैवाविर्भावितानां पर - व्यूह - विभव - अन्तर्यामि - अर्चाख्यानां पञ्चानां मूर्तीनां स्वरूपनिरूपणपरं पञ्चरात्रं स एव प्रणीतवानिति, पञ्चरात्रप्रणेता एव शतपथब्राह्मणे पञ्चरात्रसत्रपुरुष. इति श्रेडर्महाशय· अभिप्रैति[103]।

'ताप - पुण्ड्र - नाम - मन्त्र - यागसंज्ञकाः पञ्च संस्काराः शास्त्रेऽस्मिन् प्रतिपाद्यन्त इति च शास्त्रस्यास्य पञ्चरात्रसमाख्या' इति महामहोपाध्याय लक्ष्मीपुरं श्रीनिवासाचार्या अभिप्रयन्ति[104]।

एतेषु मतेषु परिशीलितेषु इदमेव वक्तव्यं भवति यत् पञ्चरात्रसंप्रदायस्य कालमहिम्ना विच्छेदे सति कुशलमतिभिः पञ्चरात्रशब्दस्य विभिन्ना व्युत्पत्तय· संहितासु प्रदर्शिताः स्युरिति।

100. प्रथम ब्रह्मरात्रं तु द्वितीय शिवरात्रकम्।
तृतीयमिन्द्ररात्र तु चतुर्थं नागरात्रकम्॥
पञ्चमं ऋषिरात्र तु पञ्चरात्रमिति स्मृतम्। भा २.१२,३

101. 'The name Pancaratra' - Journal of the American Oriental Society, 85 - 1 (1965) P76,

102. द्र दो पा र. उपो पृ x1,

103. Introduction to the Pancaratra and the Ahirbudhnya Samhita P25

104 दर्श पृ ४९९

वस्तुतस्तु पौष्करोक्तक्रमेण परतत्त्वादिकं सुविशदं पञ्चरात्रे यथा उपपाद्यते न तथा वेदादिशास्त्रेषु इति वेदादीनां पञ्चानां रात्रित्वापादकस्य पञ्चरात्रशास्त्रस्य महामहिमत्वख्यापनमेव पञ्चरात्रसंज्ञायां तात्पर्यमिति।

## 1.8.0. पञ्चरात्रस्य आगमसिद्धान्तादिभेदेन चतुर्विधत्वम्

प्रतिबुद्धविषयभगवदनन्यभजनोपदेशप्रवृत्तं पञ्चरात्रम्[105] आगमसिद्धान्त - मन्त्रसिद्धान्त - तन्त्रसिद्धान्त - तन्त्रान्तरसिद्धान्तभेदेन चतुर्विधं भवति[106]। आगमसिद्धान्तादयः सिद्धान्ताः क्रमशः स्वयंव्यक्तसिद्धान्त - दिव्यसिद्धान्त - सैद्धसिद्धान्त - आर्षसिद्धान्तसंज्ञाभिः व्यवह्रियन्ते[107]। पञ्चरात्रान्तर्गतश्रीकर-संहितायां तु पञ्चरात्रसिद्धान्ताः वेदसिद्धान्त - दिव्यसिद्धान्त - तन्त्रसिद्धान्त - पुराणसिद्धान्तसंज्ञाभिः व्यपदिश्यन्ते[108]।

आगमसिद्धान्तादयः सिद्धान्ताः 'सिद्धान्त'संज्ञया 'पञ्चरात्र' - संज्ञया च प्रथन्ते[109]। सिद्धान्तेष्वेषु सिद्धाद्यैः संक्षिप्ततया, विस्तृततया, संक्षिप्तविस्तृततया च स्वाशयाः प्रकटीक्रियन्ते।

---

105 न्या. प पृ २८७

106. तच्चतुर्धा स्थित शास्त्रमृगादिवदनेकधा॥
एकैक भिद्यते तन्त्र शाखाभेदेन भूयसा।
प्रथम मन्त्रसिद्धान्त द्वितीय चागमाह्वयम्॥
तृतीय तन्त्रसिद्धान्त तुर्य तन्त्रान्तर भवेत्। पाद्म. (च) १९. १११cd-३ab

107. चतुर्धा भेदभिन्न च स्वयव्यक्तादिभेदतः।
स्वयव्यक्त हि सिद्धान्तमागमाख्य पुरोदितम्॥
मन्त्रसिद्धान्तसज्ञ तु यद्दिव्य परिकीर्तितम्।
तन्त्रसिद्ध हि यच्छास्त्रं तत्सैद्ध समुदाहृदम्॥
तन्त्रान्तर तु यत्प्रोक्त आर्षं तत्समुदाहृतम्। Ibid २२

108 द्र पा. र पृ ३०

109 एव नानागमानां च सामान्य विद्धि सर्वदा॥
नामद्वय च सिद्धान्तं पञ्चरात्रेति पौष्कर। पौ ३८ ३०२cd, ३

अनेकेषु जन्मसु वेदेषु इतिहासपुराणादिषु च कृतपरिश्रमाणां पर्यन्ते पञ्चरात्रसिद्धान्ते निष्ठा भवति इति, वासुदेवाख्यमव्ययं परं ब्रह्म अस्मात् पञ्चरात्रशास्त्रात् ज्ञानपूर्वकर्मणा प्राप्यत इति च पञ्चरात्रस्य सिद्धान्तसंज्ञा उपपद्यत इति पौष्करसंहितायां निर्दिश्यते[110]।

मीमांसादिषु शास्त्रेषु सिद्धार्थैर्मनीषिभिः अन्ते पञ्चरात्रं सेव्यत इत्यतः पञ्चरात्रस्य सिद्धान्तसंज्ञा प्रचलतीति पाद्मसंहिता सिद्धान्तपदं निर्वक्ति[111]।

आगमसिद्धान्तादीनां चतुर्णामपि परब्रह्मभूत - वासुदेवप्रापकत्वम-विशिष्टम्[112]।

### 1.8.1. आगमसिद्धान्तः

पञ्चरात्रभेदानाम् आगमसिद्धान्तादीनां लक्षणं पौष्कर - ईश्वर - पारमेश्वर- पाद्मसंहितासु भिन्नतया निर्दिश्यते।

---

110 सेतिहासं पुराणैस्तु वेदैर्वेदान्तसयुतै ।
ये जन्मकोटिभि सिद्धास्तेषामन्तोऽत्र वै स्मृत ॥
यस्मात्सम्यक् पर ब्रह्म वासुदेवाख्यमव्ययम्।
एतस्मात् प्राप्यते शास्त्राद् ज्ञानपूर्वेण कर्मणा॥
सिद्धान्तसज्ञा विप्रास्य सार्थका अत एव हि। Ibid , ३८ ३०५ - ७ab
ये जन्मकोटिभि सिद्धा तेषामन्तोऽत्र जन्मन ।
यस्मात्तद्विवेदैष सिद्धान्ताख्यो यथार्थत ॥ पार १९ ५४४

111 महोपनिषदं नाम सिद्धान्तपदशब्दितम्।
मीमासादिषु शास्त्रेषु ये सिद्धार्था मनीषिण ॥
तेषामन्तेऽधिकारोऽस्मिन्निति सिद्धान्तशब्दितम्। पाद्म (च) १९ ११०,१ab

112 हयग्रीवसंहितायाम् -
आगमाख्यं हि सिद्धान्त सन्मोक्षैकफलप्रदम्।
मन्त्रसज्ञ हि सिद्धान्त सिद्धिमोक्षप्रद नृणाम्॥
तन्त्रसज्ञ तु सिद्धान्त चतुर्वर्गफलप्रदम्।
तन्त्रान्तरं हि सिद्धान्त वाञ्छितार्थफलप्रदम्॥

तथा हि -

यत्र सिद्धान्ते वासुदेव - संकर्षण - प्रद्युम्न - अनिरुद्धाख्य व्यूहचतुष्टयं स्वस्वनामभिः क्रमागतैर्ब्राह्मणैरुपास्यते स आगमसिद्धान्त इति पौष्करसंहितायाम्[113], नित्योदितव्यूह (वासुदेव) स्थापनादिप्रकाशकः, अपौरुषेय., सद्ब्रह्मवासुदेवयाजिभिः द्विजेन्द्रैरुपास्य· ब्रह्मोपनिषदाभिध· दिव्यमन्त्रक्रियान्वितः श्रुतिरूपः सर्वधर्मोत्तमश्च आगमसिद्धान्त इति ईश्वरसंहितायां च आगमसिद्धान्तस्य लक्षण कथ्यते[114]।

पारमेश्वरसंहितायाम् आगमसिद्धान्तस्य लक्षणम् ईश्वरसंहितानुसारेणैव निर्दिश्यते[115]।

आगमसिद्धान्तः कर्मसंन्यासपर इति पौष्करसंहितापेक्षया अधिकतया

---

113. . शास्त्रभेदमथोच्यते।
कर्तव्यत्वेन वै यत्र चातुरात्म्यमुपासते ॥
क्रमागतै स्वसज्ञाभि ब्राह्मणैरागम तु तत्।
विद्धि सिद्धान्तसज्ञ च तत्पूर्वमथ पौष्कर॥ पौ. ३८ २४३ bcd, ४
(तत्पूर्वम् - आगमपदपूर्वकम्)

114 आद्यं नित्योदितव्यूहस्थापनादिप्रकाशकम्॥
अपौरुषेय सद्ब्रह्मवासुदेवाख्ययाजिनाम्।
लक्ष्यभूत द्विजेन्द्रणा हृदिस्थमधिकारिणाम्॥
ब्रह्मोपनिषदाख्य च दिव्यमन्त्रक्रियान्वितम्।
विवेकद पर शास्त्र अनिछातोऽपवर्गदम्॥
एवं नित्योदिताख्यस्य नित्याकारस्य च प्रभो ।
वासुदेवाभिधानस्य षाड्गुण्यादिगुणोदधे· ॥
प्रथमं लक्षण विद्धि हृदयाद्यङ्गशब्दवत्।
एतदागमसिद्धान्तं श्रुतिरूपं तु विद्धि तत्॥
एष कार्तयुगो धर्म सर्वधर्मोत्तम स्मृत । ई २१ ५६१cd - ५६५ab

115. पार १९ ५२४ - ८

पाद्मसंहितायां कथ्यते[116]।

पूर्वोक्तानाम् आगमसिद्धान्तलक्षणानां परिशीलनेन एतदवगन्तव्यं भवति यत् पौष्करपाद्मसंहितयोरनुरोधेन व्यूहचतुष्टयोपासनपरं शास्त्रम् आगमसिद्धान्त इति, ईश्वरसंहितानुरोधेन तु नित्योदितव्यूहस्य उपासने विवेकप्रदं शास्त्रम् आगमसिद्धान्त इति चायाति।

तथा च आगमसिद्धान्तलक्षणे पञ्चरात्रसंहितानाम् ऐकमत्यं न दृश्यत इति।

**1.8.2. मन्त्रसिद्धान्तः**

नानाव्यूहसमेतं मूर्तिद्वादशकं, मूर्त्यन्तरयुतः प्रादुर्भावगणः प्रादुर्भावान्तराणि च लक्ष्म्यादिभिः शङ्खचक्रगरुत्मद्दिगीश्वरैः सगणैश्च सह यत्सिद्धान्तानुरोधेन तन्त्रनिष्ठैराराध्यन्ते स मन्त्रसिद्धान्त इति पौष्करसंहितायाम् उपपाद्यते[117]।

मन्त्र - मण्डल - मुद्रा - कुण्डादीनां लक्षणम्, दीक्षा, मूर्तिस्थापनादिकं च यस्मिन् सिद्धान्ते उपवर्ण्यते स आगमसिद्धान्तान्निःसृतः उपदेशानुरोधेनावतीर्णः मन्त्रसिद्धान्त इति ईश्वरसंहितायां, पारमेश्वरसंहितायां च

---

116 वासुदेवादयो व्यूहाश्चत्वारः साधकैरपि।
क्रमागतैस्तुल्यकक्ष्या पूज्यास्तत्प्रभवाप्यये॥
कर्मणामपि सन्यासः कथ्यते यत्र चागमे।
तन्त्रमागमसिद्धान्तं तदुक्तं कमलासन। पाद्म (च) १९ ११६,७

117 नानाव्यूहसमेतं च मूर्तिद्वादशकं हि यत्।
तथा मूर्त्यन्तरयुतं पादुर्भावगण (?) तु वै॥
प्रादुर्भावान्तरयुत (?) धृ (वृ) तं हृत्पद्मपूर्वकम्।
लक्ष्म्यादिशङ्खचक्राख्यगारुत्म्यसदिगीश्वरैः॥
सगणैस्तन्त्रनिष्ठैस्तु तं विद्धि कमलोद्भव।
मन्त्रसिद्धान्तसंज्ञं च शास्त्रं सर्वफलप्रदम्॥ पौ ३८ २९५-७

पौष्करसंहितोक्तातिरिक्ततया निर्दिश्यते[118]।

श्रियादिभिः परिवृता केवला वा एकैव मूर्ति· सिद्धान्तानुसारेण आराध्यते स मन्त्रसिद्धान्त इति पाद्मसंहितायां वर्ण्यते[119]।

---

118. ततस्त्रेतायुगस्यादौ भोगमोक्षप्रसिद्धये ॥
तस्मादागमसिद्धान्तान्नि सृतं बहुभेदकम्।
मन्त्रसिद्धान्तसज्ञ तज्जाग्रद्व्यूहादिमूर्तिना॥
समुत्कीर्णं द्वितीयस्य सात्त्वतस्य महात्मन ।
तेन प्रद्युम्नसंज्ञस्य तेन तुर्यात्मनो विभो ॥
तेन वागीश्वराख्यस्य तस्माद्द्वीपाख्यविग्रहे।
संक्रान्त च तत पश्चाद्रुद्रादित्येन्द्रवह्निषु॥
तथैव नारदाद्येषु देवताना गणेषु च।
सक्रान्त मन्त्रसिद्धान्त भेदभिन्नमनेकधा॥
यत्र शान्ततर व्यूह शान्तोदितमनन्तरम्।
सुषुप्तिसज्ञं स्वप्नाख्यं जाग्रद्व्यूह यथोदितम्॥
मूर्त्यन्तर केशवाद्यं प्रादुर्भाव तथान्तरम्।
हृत्पद्मपद्मपीठादौ लक्ष्मीपुष्ट्यादिशक्तिभि ॥
लाञ्छनै शङ्खचक्राद्यै गरुडप्रमुखैरपि।
भूतसिद्धादिभि शास्त्रपर्यन्तैर्यजन हितम्॥
विश्वत्रातृनृसिंहस्य दीक्षापूर्व तथा परम्।
विभवव्यूहसूक्ष्माख्यमधिकार यथाक्रमम्॥
समयीपुत्रकादीना चतुर्णामभिषेचनम्।
तथैव समयाचारं मूर्तीना स्थापनक्रमम्॥
मन्त्रमण्डलमुद्राणा कुण्डादीना च लक्षणम्।
कर्मणामेवमादीनां विधान यत्र पुष्कलम्॥
मन्त्रसिद्धान्तसंज्ञ तद्बहुभेदसमन्वितम्। ई २४ ५६६cd - ७७ab, पार.१९ ५२९-३९

119. एकैव मूर्तिराराध्या प्राधान्येनेतरा पुन ॥
देव्य श्रियादयश्चापि सपूज्या परिवारवत्।
आयुधै शङ्खचक्राद्यै श्रीवत्साद्यैश्च भूषणै ॥
मूर्तिमद्भि परिवृता केवला वाम्बुजासन।
कथ्यते यत्र तत्प्रोक्त मन्त्रसिद्धान्तमग्रिमम्॥ पाद्म (च)१९ ११३-५

किं त्वयं सिद्धान्त· पौष्कर - ईश्वर - पारमेश्वरसंहितासु तन्त्रसिद्धान्त इति संज्ञान्तरेण व्यपदिश्यते।

मन्त्रसिद्धान्तलक्षणानां पूर्वोक्तानां परिशीलनेन श्रियादिभिः परिवृतानां व्यूहादीनाम् उपासनप्रकारोपदेशकं शास्त्रं मन्त्रसिद्धान्त इति पौष्कर - ईश्वर - पारमेश्वरसंहिताः निर्दिशन्ति चेत् श्रियादिभि· परिवृताया केवलाया वा एकस्या एव मूर्तेरुपासनपरं शास्त्रं मन्त्रसिद्धन्त इति प्रकारान्तरेण पाद्मसहिता निर्दिशति। तथा च मन्त्रसिद्धान्तलक्षणे च पञ्चरात्रसंहितासु समानाभिप्रायो नास्तीत्यवगम्यते।

### 1.8.3. तन्त्रसिद्धान्तः

वासुदेवादिमूर्तिचतुष्कं विना अन्यद्भगवद्रूपं (एकैव मूर्तिः) श्रियादिभिः परिवृतं केवलं वा आराधनीयत्वेन यत्रोपदिश्यते स सिद्धान्तः तन्त्रसिद्धान्त इति पौष्करसंहिता अभिप्रैति[120]।

तन्त्रसिद्धान्तलक्षणे ईश्वर - पारमेश्वरसंहिते पौष्करसंहितया संवदेते[121]। पौष्करादिसंहितानुरोधेन तन्त्रसिद्धान्तत्वेनाभिमतोऽयं सिद्धान्त· पाद्मसंहितायां मन्त्रसिद्धान्तसंज्ञया व्यवह्रियते।

नवमूर्तय·, द्वादशमूर्तयः, पादुर्भावगणः, मूर्त्यन्तरगणः, प्रादुर्भावान्तराणि सपरिवारं यं सिद्धान्तमनुरुध्य आराध्यन्ते स तन्त्रसिद्धान्त इति

120 विना मूर्तिचतुष्केण यत्रान्यदुपचर्यते।
मन्त्रेण भगवद्रूप केवल यागसयुतम्॥
युक्त श्रियादिकेनैव कान्ताव्यूहेन पौष्कर।
भिन्नैराभरणैरस्त्रैरावृत च सविग्रहै ॥
तन्त्रसिद्धान्तसज्ञ तच्छास्त्र भोगापवर्गदम्। पौ. ३८.२९८-३००ab

121 परव्यूहादिभदेन विनैकैकेन मूर्तिना॥
साङ्गेन केवलेनाथ कान्ताव्यूहेन भूषणै ।
तथास्त्रैर्विग्रहोपेतै आवृत तन्त्रसज्ञितम्॥ ई २१ ५७७cd,८, पार १९ ५४०, १

प्रकारान्तरेण पाद्मसंहिता तन्त्रसिद्धान्तलक्षणं निर्दिशति[122]।

तन्त्रसिद्धान्तलक्षणानां पूर्वोक्तानां परिशीलनेन पौष्कर - ईश्वर - पारमेश्वरसंहितानां तन्त्रसिद्धान्तलक्षणे मतैक्यं पाद्मसंहितायाश्च मतान्तरं सुस्पष्टं भासते।

### 1.8.4. तन्त्रान्तरसिद्धान्तः

मुख्यानुवृत्तिभेदेन सिंहवक्त्रादयो एकाधिकवक्त्रयुताश्च मूर्तयः सपरिवाराः केवला वा यदनुरोधेन अर्च्यन्ते सः तन्त्रान्तरसिद्धान्त इति पौष्करसंहितायामुपवर्ण्यते[123]।

नृसिंहकपिलक्रोडवागीश्वरादयो मूर्तयः मुख्यानुवृत्तिभेदेन साङ्गाः केवला वा यत्सिद्धान्तमनुसृत्य समर्च्यन्ते स तन्त्रान्तरसिद्धान्त इति ईश्वर - पारमेश्वरसंहितयोरुपपाद्यते[124]।

---

122 नवानामपि मूर्तीना प्राधान्यं यत्र कथ्यते।
मूर्तयो द्वादशाङ्गानि तेषामेव तथा पदे॥
प्रादुर्भावगणाश्चान्ये मूर्त्यन्तरगणा अपि।
प्रादुर्भावान्तरयुता सदिग्देवै सहायुधै॥
मूर्तिमद्भिश्च देवीभि लक्ष्म्यादिभिरपि स्फुटम्।
तत्तन्त्रसिद्धान्ताह्वयम् .. .॥ पाद्म (च) १९ ११८-२०abc

123. मुख्यानुवृत्तिभेदेन यत्र सिहादयस्तु वै॥
चतुस्त्रिद्व्यादिकेनैव योगेनाभ्यर्चिते तु वै (न तु)।
सवृता परिवारेण स्वेन स्वेनान्वि(स्थि)तास्तु वा॥
यच्छक्त्याराधितं सर्वं विद्धि तन्त्रान्तर तु तत्। पौ. ३८ ३००-२ab

124 नृसिहकपिलक्रोडहसवागीश्वरादय।
मुख्यानुवृत्तिभेदेन केवले वाङ्गसयुता॥
चक्राद्यस्त्रवरैश्चाथ भूषणैर्मकुटादिभि।
कान्तागणैश्च लक्ष्म्याद्यै परिवारै खगादिकै॥
पूजिता विधिना यत्र तत्तन्त्रान्तरमीरितम्। ई २१ ५८९-९१ab, पार १९ ५४१-३

तन्त्रान्तरसिद्धान्तलक्षणे पाद्मादिसंहितानां सवाद· स्फुट

उपर्युक्तानां पञ्चरात्रप्रभेदानाम् आगमसिद्धान्तादीनां चतु
परिशीलयतां विमर्शकानां वासुदेव - संकर्षण - प्रद्युम्न - अनिरुद्ध
व्यस्तानां वा केशवादिमूर्त्यन्तराणां वा श्रियादिभि· परिवृतानां ि
आराधनक्रमोपदेशकं शास्त्र पञ्चरात्रमित्यतिरोहितमेव भाति ।

## 1.9. पञ्चरात्रागमग्रन्था:

सिद्धान्तचतुष्टयोपेते पञ्चरात्रे ग्रन्था बहवो वर्तन्ते । क्रैस्त
प्रथितेन तन्त्रशास्त्रज्ञेन उत्पलाचार्येण **स्पन्दप्रदीपिकायाम्** -

पञ्चरात्रश्रुतावपि - *यद्वत् सोपानेन प्रासादमारुहेत् प्लवेन*
*तरेत् तद्वच्छास्त्रेणैव हि भगवान् शास्ताऽवगन्तव्य:*[126]

इति पञ्चरात्रश्रुतिवाक्यम्,

पञ्चरात्रोपनिषदि च - *ज्ञाता च ज्ञेयं च वक्ता च वाच्यं च*
*भोग्यं च इत्यादि । तथाऽत्रैव 'सर्वान्तरं सर्वबाह्यं स्वयं ज्*
*स्वयं संबोध्यं स्वयंभूरिति च' इति*[127]

इति पञ्चरात्रोपनिषद्वाक्यम्,

पञ्चरात्रेऽपि -

---

125 . ... चतुर्थ परम पुन ॥
सौम्यसिहादिभूयिष्ठ वक्त्रभेदैश्चतुर्मुख ।
द्वित्रादिमुखभेदा वा मूर्तिरेकैव पूज्यते ॥
परिवारै र्युता वा विना वा सर्वकामदा ।
यत्र तन्त्रान्तर तत्स्याच्चतुर्थं कमलासन ॥ पाद्म (च) १

126 त स्प. प्र. ८४

127. Ibid ११५

*'त्रिविधो दोषः – स्वभावजस्तामसो विकल्पजो राजसः'*

*'यावत्तेनैव देहेन वशीभवति भगवद्भूतस्तदा सर्वज्ञो भवति सर्वदर्शी सर्वेश्वरः सर्वशक्तिः'*[128] । *'तस्य च प्रादुर्भवतः किं पूर्वरूपम्? यत् सर्वज्ञो भवति सर्वदर्शी सर्वेश्वरः सर्वशक्तिः'* इति[129] ,

*'तद्यथा अग्निर्नाम कस्मिंश्चिद्दाह्ये नान्यत्किञ्चिदुपादत्ते तेन धक्ष्यामीति स्वयमेव दहति । एवमयमात्माऽनुपादाय ज्ञाताऽनुपादायकारी स्वात्मनैव सर्वकरः'* इति[130]

*'यदात्मनि सर्वभूतानि पश्यत्यात्मानं च तेषु पृथक्च तेभ्यस्तदा मृत्योर्मुच्यते जन्मनश्च'* इति[131],

*' न तत्रादित्यो भाति'* इत्यादि[132],

*प्रज्ञाप्रासादमारुह्य अशोच्यः शोचतो जनान् ।*
*भूमिष्ठानिव शैलस्थः सर्वान् प्राज्ञोऽनुपश्यति ॥* इति[133]

*'यथा भगवत्येव वक्तरि वृत्तिः'* इति[134]

इत्यादीनि पञ्चरात्रवाक्यानि,

---

128. Ibid ८८
129 Ibid १००
130 Ibid १००
131. Ibid १०६
132 Ibid १११
133 Ibid ११६
134 Ibid १२७

श्रीपौष्करायां ह्युक्तम् -

चिन्तामणौ स्वरूपेण न किंचिदुपलभ्यते।

अथ चाभिमतं सूते ब्रह्मैवं सर्वशुक्तिकम्।। इति[135]

तथा च श्रीसात्त्वता -

अज्ञता व्यापकत्वं च सुखदुःखादिवेदनम्।

सर्वज्ञस्यात्मतत्त्वस्य कर्मचक्रावलम्बनात्।।

गती स्वेषा प्रकृत्याख्या शुद्धि· प्राक्कर्मवासना।

मायाऽविद्या भ्रमो मोहोऽज्ञानं मलमिति क्वचित्।। इति[136]

अन्यच्च **जयाख्यसंहितायाम्** -

निष्कम्पबोधसामान्यरूपो मात्रा पुरा स्वयम्।

ये शब्दजनिता भावाः सूक्ष्मसूक्ष्मतराऽखिलाः ।।

सामान्यबोधशब्दस्य पश्यतस्त्वेकतां गताः।

यदाऽभिमुखमायान्ति संकल्पाद्युत्थितस्य च।।

शब्दरूपपदार्थस्य शब्दः स परमः स्मृतः।

संकल्पपदवीरुढ· स्फुरत्यन्त. स्थितः स्फुटम्।।

पदार्थोपरमः शब्दो मध्यमं विद्धि तं मुने।

चिद्वायुकरणोत्थासु प्रयत्नपदवीषु च।।

वाच्यवाचकभावेनाऽभिव्यक्त स्थूल उच्यते।

135. Ibid ८५

136 Ibid ९८

दृश्यादृश्येषु भावेषु योऽभिव्यक्तिं प्रयाति च ।।

स तु स्थूलतरश्चैव व्यवहारेऽखिले स्थितः । इति[137]

प्रोक्तं हि **श्रीजयायाम्** -

तत्त्वनिर्मुक्तदेहस्य केवलस्य चिदात्मन· ।

य उदेति महानन्दः सा शक्तिर्वैष्णवी परा ।। इति[138]

तदुक्तं **जयायाम्** -

एकस्य मन्त्रनाथस्याप्यन्तर्बाह्योदितस्य च ।

यदैक्यं तं जपं विद्धि लक्षसंख्याधिकं मुने ।। इति[139]

तदुक्तं **जयायाम्** -

यस्माद्देवो जगन्नाथः कृत्वा मन्त्रमयीं तनुम् ।

मग्नानुद्धरते लोकान् कारुण्याच्छास्त्रपाणिना ।। इति[140] ।

इत्यादीनि संहितावचनानि च उद्ध्रियन्ते ।

अनेन स्पन्दप्रदीपिकाकारस्य उत्पलाचार्यस्य काले पञ्चरात्रश्रुतिः, पञ्चरात्रोपनिषत्, पञ्चरात्रम्, पौष्कर - सात्त्वत - जयाख्यसंहिताश्च प्रथिता आसन् इत्यनुमातुं शक्यते ।

उत्पलाचार्येण पञ्चरात्रान्तर्गततया निर्दिश्यमानः -

प्रज्ञाप्रासादमारुह्य अशोच्यः शोचतो जनान् ।

137 Ibid ८९

138 Ibid ९१

139 Ibid ११०

140 Ibid १२७

भूमिष्ठानिव शैलस्थः सर्वान् प्राज्ञोऽनुपश्यति[141] ।।

इत्ययं श्लोकः पञ्चरात्रान्तर्गतायाम् अहिर्बुध्न्यसंहितायां दृश्यते । तस्मात् उत्पलाचार्येण पञ्चरात्रश्रुति - पञ्चरात्रोपनिषदतिरिक्ततया पञ्चरात्रपदेन व्यपदिश्यमानः विभाग एव इदानीं पञ्चरात्रपदेन व्यपदिश्यमानं शास्त्रं स्याद्वा इत्यस्ति संदेहस्यावकाशः।

पञ्चरात्रं पञ्चलक्षप्रमाणोपेतमिति[142], सार्धकोटिप्रमाणसंयुतमिति[143], शतकोटिग्रन्थसंख्यायुतमिति[144] च पक्षत्रयं पञ्चरात्रविस्तारे पञ्चरात्रसंहितासूपलभ्यते। पञ्चरात्रविस्तारे पञ्चरात्रसंहितासु ऐकमत्यं नास्तीति तद्विस्तरः निर्णेतुं न शक्यः ।

पौष्करसंहितायां पञ्चरात्रग्रन्थाः श्लोकसंख्यानुरोधेन पाद- मूल - उद्धार - उत्तर - बृहदुत्तर - कल्प - संहिता - कल्पस्कन्ध - तन्त्रभेदेन नवधा विभक्ताः[145] ।पौष्करनिर्दिष्टानाम् एषां नवानां भेदानां ग्रन्थाः साम्प्रतं नैवोपलभ्यन्ते।

141. अहि १५.७१cd,२ab

142. विह १.३५,६

143. मा १.२२,३, वि. ति २.१४०,४; श्रीप्र २ ४१

144. विश्वा २.३४

145 अनुष्टुप्छन्दोबन्धेन बद्ध श्लोकशतात्तु यत् ।।
पादसज्ञं हि तच्छास्त्रं मूलाख्य द्विगुण च तत् ।
यत्सार्ध शतसङ्ख्य तु तदुद्धारमिति स्मृतम् ।।
न्यूनभेदास्त्रयस्त्वेते ऊनाधिक्येन वै सह ।
बहुधा चापि सर्वेषा न सज्ञा चलते पुन ।।
सार्धं शतद्वय यद्वै परिज्ञेय तदुत्तरम् ।
बृहदुत्तरसज्ञ च यदेतद्द्विगुण भवेत् ।।
सार्ध सहस्रसङ्ख्य तु कल्प तत्समुदाहृतम् ।
त्रयस्यास्य परिज्ञेयमूनाधिक्य पुन शनै ।।
एव सज्ञान्तरास्त्वन्ये आगमा सन्त्यनेकश ।
कल्पैकदेशास्ते सर्वे परिज्ञेयास्तथाब्जज ।।
आसहस्रत्रयात् सार्धात् षट्सहस्र हि सोत्तरम् ।

श्लोकसंख्यानिरपेक्षतया संहिताग्रन्था. तन्त्रग्रन्थाश्च सांप्रतमुपलभ्यन्ते। संहिता - तन्त्रपदे पर्यायत्वेन व्यवह्रियेते। तन्त्र - सहितापदाभ्यां व्यवह्रियमाणानां पञ्चरात्रग्रन्थानां संख्यानिर्णये कपिञ्जलादिग्रन्थगतं संहितानुक्रमणं प्रमाणयन्ति विद्वांसः। तत्र,

कपिञ्जल - पाद्म - विष्णु - हयशीर्षसंहिताभ्यः अग्निपुराणाच्च संहितानुक्रमणीः संगृह्य शर्मण्यविदुषा श्रेडर्महाशयेन आङ्ग्लभाषायां विरचिते पाञ्चरात्राहिर्बुध्न्यसंहितोपोद्घाताख्ये (Introduction to the Pancaratra and Ahirbudhnya Samhita) विमर्शग्रन्थे दशाधिकद्विशतसंख्याका· पञ्चरात्रसंहिताः परिगणिताः।

पं. वि. कृष्णमाचार्याः लक्ष्मीतन्त्रस्योपोद्घाते कपिञ्जल - पाद्म - भारद्वाज - मार्कण्डेय - विष्णुतन्त्र - हयशीर्षसंहितानां संहितानुक्रमणीराधृन्य एकोनविंशत्यधिकद्विशतसंख्याका इति, पञ्चरात्ररक्षादिषु निर्दिष्टाभिः षड्भि पञ्चरात्रसंहिताभिः सह पञ्चविंशत्यधिकद्विशतसंख्याकाः पञ्चरात्रसंहिताः भवन्तीति निर्दिशन्ति[146]।

पञ्चरात्रसंहितानां संख्यानिर्णयः न सुशक इति कथयन्तो प्रो. उ. शंकरभट्टमहोदयाः कपिञ्जल - पाद्म - पारमेश्वर - पुरुषोत्तम - भारद्वाज -

---

द्विषट्सहस्रपर्यन्तं संहिताख्य तदागमम्॥
ये चान्ये चान्तराल वै शास्त्रार्थेनाधिकै शतैः।
सर्वेषा सहितासंज्ञा बोद्धव्या कमलोद्भव॥
सपादलक्षपर्यन्ता ये च शास्त्रण्यतोर्ध्वत ।
सहस्राशतमानेन आधिक्येन प्रकाशिता ॥
कल्पस्कन्धात्तु ते सर्वे परिज्ञेया क्रमेण तु।
लक्षाधिकैस्तु बहुभि. सहस्रैस्तु शतान्वितै ॥
सार्धकोटित्रयान्त च तच्च तन्त्राख्यमागमम्।
नवप्रकारमित्येतद्भेदमुक्तं . . ॥ पौ. २cd - ९२

146 पृ १३

मार्कण्डेय - विश्वामित्र - विष्णुतन्त्रसंहिताः, अग्निपुराणं परमवैदिकसिद्धान्तरत्नाकरं च आधृत्य तद्गतसंहितानुक्रमणी. परिशील्य अष्टचत्वारिंशदधिकद्विशतसंख्याका. पञ्चरात्रसंहिता इति स्वकीये 'विश्वामित्रसंहितायाः तुलनात्मकमध्ययनम्' इति शोधप्रबन्धे समुल्लिखन्ति[147]। तैः परिगणिताः पञ्चरात्रसंहिता. यथा -

| | | | |
|---|---|---|---|
| 1. | अच्युततन्त्रम् | 15. | आनन्दतन्त्रम् |
| 2. | अधोक्षजतन्त्रम् | 16. | आरुणतन्त्रम् |
| 3. | अनन्ततन्त्रम् | 17. | इन्द्रशक्रसंवादतन्त्रम् |
| 4. | अनन्तमूर्तितन्त्रम् | 18. | ईशानतन्त्रम |
| 5. | अनिरुद्धतन्त्रम् | 19. | ईश्वरसंहिता |
| 6. | अमृतसंहिता | 20. | उत्तरगार्ग्यतन्त्रम् |
| 7. | अम्बरतन्त्रम् | 21. | उदङ्कसंहिता |
| 8. | अष्टाक्षरविधानतन्त्रम् | 22. | उमामहेश्वरतन्त्रम् |
| 9. | अष्टाङ्गतन्त्रम् | 23. | उशनस्तन्त्रम् |
| 10. | अहिर्बुध्न्यतन्त्रम् | 24. | ऐन्द्रतन्त्रम् |
| 11. | अगस्त्यतन्त्रम् | 25. | औपगायनतन्त्रम |
| 12. | आग्नेयतन्त्रम् | 26. | औपेन्द्रतन्त्रम् |
| 13. | आङ्गिरसतन्त्रम् | 27. | कण्वसंहिता |
| 14. | आत्रेयतन्त्रम् | 28. | कपिञ्जलतन्त्रम् |

147 पृ. १६-८

148 A Descriptive Bibliography of the Printed texts of The Pancaratragama Vol 1

29. कलिराघवतन्त्रम्
30. कल्कितन्त्रम्
31. कात्यायनतन्त्रम्
32. कपिलतन्त्रम्
33. कामतन्त्रम्
34. काश्यपतन्त्रम्
35. काष्र्ण्यतन्त्रम्
36. कुमुदतन्त्रम्
37. कुशलतन्त्रम्
38. कूर्मतन्त्रम्
39. कृष्णशाबरसंहिता
40. केशवतन्त्रम्
41. कौबेरतन्त्रम्
42. कौमारतन्त्रम्
43. क्रतुतन्त्रम्
44. खगेशतन्त्रम्
45. गङ्गातन्त्रम्
46. गजेन्द्रतन्त्रम्
47. गणेशसंहिता
48. गरुडतन्त्रम्
49. गरुडध्वजसंहिता
50. गन्धर्वगणसंहिता
51. गार्ग्यतन्त्रम्
52. गालवतन्त्रम्
53. गोविन्दसंहिता
54. गौतमतन्त्रम्
55. चतुर्मूर्तिसंहिता
56. चान्द्रमासतन्त्रम्
57. [illegible]ण्डिजतन्त्रम्
58. [illegible]दनतन्त्रम्
59. जयाख्यसंहिता
60. जयोत्तरतन्त्रम्
61. जाबालतन्त्रम
62. जामदग्न्यतन्त्रम्
63. जैमिनतन्त्रम्
64. ज्ञानतन्त्रम्
65. ज्ञानार्णवतन्त्रम्
66. तत्त्वसागरतन्त्रम्
67. तार्क्ष्यतन्त्रम्
68. तेजोद्रविणतन्त्रम्

69. त्रिविक्रमतन्त्रम्
70. त्रैलोक्यमोहनतन्त्रम्
71. त्रैलोक्यविजयतन्त्रम्
72. दक्षसंहिता
73. दत्तात्रेयतन्त्रम्
74. दधीचसंहिता
75. दशोत्तरतन्त्रम्
76. दामोदरीयकतन्त्रम्
77. दुर्गातन्त्रम्
78. दुर्वासतन्त्रम्
79. देवलसंहिता
80. धनदीयतन्त्रम्
81. धनंजयतन्त्रम्
82. नन्दतन्त्रम्
83. नलकूबरतन्त्रम्
84. नारदीयतन्त्रम्
85. नारदोत्तरतन्त्रम्
86. नारसिंहतन्त्रम्
87. नारायणतन्त्रम्
88. नृकेसरितन्त्रम्
89. नैर्ऋततन्त्रम्
90. पञ्चतत्त्वतन्त्रम्
91. पञ्चप्रश्नतन्त्रम्
92. पद्मनाभतन्त्रम्
93. पद्मोद्भवतन्त्रम्
94. परपौरुषतन्त्रम्
95. परमसंहिता
96. पवनतन्त्रम्
97. पाणिनीयतन्त्रम्
98. पाद्मतन्त्रम्
99. पारमेश्वरतन्त्रम्
100. पाराशर्यतन्त्रम्
101. पारिषदतन्त्रम्
102. पार्वततन्त्रम्
103. पार्षसंहिता
104. पावकतन्त्रम्
105. पिप्पलतन्त्रम्
106. पुण्डरीकाक्षसंहिता
107. पुरुषोत्तमतन्त्रम्
108. पुलहतन्त्रम्

109. पुष्कलतन्त्रम्
110. पुष्टितन्त्रम्
111. पुरुषतन्त्रम्
112. वेङ्गलतन्त्रम्
113. पौलस्त्यतन्त्रम्
114. पौष्करतन्त्रम्
115. प्रद्युम्नतन्त्रम्
116. प्रह्लादतन्त्रम्
117. प्राचेतसतन्त्रम्
118. बलभद्रसंहिता
119. बार्हस्पत्यतन्त्रम्
120. बोधायनतन्त्रम्
121. ब्रह्मनारदसंहिता
122. ब्रह्मसिद्धान्ततन्त्रम्
123. ब्रह्माण्डतन्त्रम्
124. ब्रह्मरात्रम्
125. भागवततन्त्रम्
126. भारद्वाजतन्त्रम्
127. भार्गवतन्त्रम्
128. भूमिसंहिता
129. मत्स्यसंहिता
130. मधुसूदनसहिता
131. मनुसंहिता
132. महाज्ञानतन्त्रम्
133. महापुरुषसंहिता
134. महालक्ष्मीसंहिता
135. महासनत्कुमारतन्त्रम्
136. महीप्रश्नतन्त्रम्
137. माधवतन्त्रम्
138. मान्दरतन्त्रम्
139. मायातन्त्रम्
140. महावैभविकतन्त्रम्
141. मारीचतन्त्रम्
142. मार्कण्डेयतन्त्रम्
143. माहेन्द्रसंहिता
144. मिहिरतन्त्रम्
145. मुकुन्दतन्त्रम्
146. मूलसंहिता
147. मेदिनीपतिसंहिता
148. मेरुतन्त्रम्

149. मैत्रेयतन्त्रम्
150. मौद्गलतन्त्रम्
151. यज्ञमूर्तितन्त्रम्
152. याज्ञवल्क्यतन्त्रम्
153. याम्यतन्त्रम्
154. योगतन्त्रम्
155. योगहृदयतन्त्रम्
156. राघवतन्त्रम्
157. रुद्रतन्त्रम्
158. रोमशतन्त्रम्
159. लक्ष्मीतन्त्रम्
160. लक्ष्मीतिलकसंहिता
161. लक्ष्मीनारायणतन्त्रम्
162. लक्ष्मीपतितन्त्रम्
163. लाङ्गलतन्त्रम्
164. लैङ्ग्यतन्त्रम्
165. वसुतन्त्रम्
166. वागीशतन्त्रम्
167. वामदेवतन्त्रम्
168. वामनतन्त्रम्
169. वायवीयतन्त्रम्
170. वाराहतन्त्रम्
171. वारुणतन्त्रम्
172. वाल्मीकिसंहिता
173. वासिष्ठतन्त्रम्
174. वासुदेवतन्त्रम्
175. विज्ञानतन्त्रम्
176. विरिञ्चिसंहिता
177. विश्वसंहिता
178. विश्वामित्रीयतन्त्रम्
179. विष्णुसंहिता
180. विष्णुतन्त्रम्
181. विष्णुतत्त्वतन्त्रम्
182. विष्णुतिलकतन्त्रम्
183. विष्णुयोगतन्त्रम्
184. विष्णुरहस्यतन्त्रम्
185. विष्णुवैभविकतन्त्रम्
186. विष्णुसंभवतन्त्रम्
187. विष्णुसद्भावतन्त्रम्
188. विष्णुसारतन्त्रम्

189. विष्णुसिद्धान्ततन्त्रम्
190. विष्वक्सेनतन्त्रम्
191. विहगेन्द्रतन्त्रम्
192. वीरमङ्गलिकतन्त्रम्
193. वैकुण्ठसंहिता
194. वैखानसतन्त्रम्
195. वैजयन्ततन्त्रम्
196. वैनतेयतन्त्रम्
197. वैभवतन्त्रम्
198. वैयासतन्त्रम्
199. वैहायसतन्त्रम्
200. शक्रतन्त्रम्
201. शर्वतन्त्रम्
202. शाम्बरतन्त्रम्
203. शाकटायनतन्त्रम्
204. शाकल्यतन्त्रम्
205. शाण्डिल्यतन्त्रम्
206. शातातपतन्त्रम्
207. शान्तितन्त्रम्
208. शार्वध्य(?)तन्त्रम्
209. शाश्वततन्त्रम्
210. शुकप्रश्नतन्त्रम्
211. शुकरुद्रसंवादतन्त्रम्
212. शुक्रतन्त्रम्
213. शुलकतन्त्रम्
214. शौनकीयतन्त्रम्
215. श्रीतन्त्रम्
216. श्रीकरतन्त्रम्
217. श्रीकृष्णसंहिता
218. श्रीतिलकतन्त्रम्
219. श्रीधरीयतन्त्रम्
220. श्रीनिवासतन्त्रम्
221. श्रीपुष्करतन्त्रम्
222. श्रीप्रश्नतन्त्रम्
223. श्रीवल्लभतन्त्रम्
224. श्वेतकेतुतन्त्रम्
225. संकर्षणतन्त्रम्
226. सत्यतन्त्रम्
227. सदाविष्णुसंहिता
228. सनकतन्त्रम्

229. सनत्कुमारतन्त्रम्
230. सनन्दतन्त्रम्
231. सर्वमाङ्गलतन्त्रम्
232. साङ्ख्यतन्त्रम्
233. सांवर्ततन्त्रम्
234. सात्त्वततन्त्रम्
235. सारस्वततन्त्रम्
236. सुबोधकतन्त्रम्
237. सौमन्तवीसंहिता
238. सौम्यतन्त्रम्
239. सौरतन्त्रम्
240. स्कन्दसंहिता
241. स्वायम्भुवतन्त्रम्
242. हयग्रीव(शीर्ष?)तन्त्रम्
243. हरितन्त्रम्
244. हरिमेखलसंहिता
245. हारीततन्त्रम्
246. हिरण्यगर्भतन्त्रम्
247. हृषीकेशसंहिता
248. हैरण्यकतन्त्रम्

इति।

एतदतिरिक्तं शिवतन्त्रं, पुराणतन्त्रं, सामान्यसंहिता चेति तन्त्रत्रयं हयशीर्षपञ्चरात्र(संहिता)मात्रे, खगप्रश्नतन्त्रं, विष्णुपञ्चकतन्त्रं, सारसमुच्यतन्त्रं चेति तन्त्रत्रयं परमवैदिकसिद्धान्तरत्नाकरमात्रे च निर्दिश्यते।

इत्थमनेकासु पञ्चरात्रसंहितासु स्थितास्वपि कतिचन एव संहिताः अद्यावधि मुद्रापिताः। बह्व्यः परं तालपत्रादिगता. हस्तलिखिताश्च वर्तन्ते।

पञ्चरात्रसंशोधनपरै· Danial Smith महोदयैः अद्यावधि मुद्रापिताः पञ्चरात्रसंहिताः अधोनिर्दिष्टाः परिगण्यन्ते[148] -

1. अगस्त्यसंहिता
2. अनिरुद्धसंहिता

3. अहिर्बुध्न्यसंहिता
4. ईश्वरसंहिता
5. कपिञ्जलसंहिता
6. काश्यपसंहिता
7. जयाख्यसंहिता
8. ज्ञानामृतसारसंहिता
9. नारदीयसंहिता
10. परमसंहिता
11. परमपुरुषसंहिता
12. पराशरसंहिता
13. पाद्मसंहिता/पाद्मतन्त्रम्
14. पारमेश्वरसंहिता
15. पुरुषोत्तमसंहिता
16. पौष्करसंहिता
17. बृहद्ब्रह्मसंहिता
18. भारद्वाजसंहिता
19. मार्कण्डेयसंहिता
20. लक्ष्मीतन्त्रम्
21. विश्वामित्रसंहिता
22. विष्णुतिलकसंहिता
23. विष्णुसंहिता
24. विष्वक्सेनसंहिता
25. शाण्डिल्यसंहिता
26. शेषसंहिता
27. श्रीप्रश्नसंहिता
28. सनत्कुमारसंहिता
29. सात्त्वतसंहिता
30. हयशीर्षसंहिता

मुद्रितासु पञ्चरात्रसंहितासु

1. अहिर्बुध्न्यसंहिता-
2. जयाख्यसंहिता-
3. नारदीयसंहिता-
4. परमसंहिता-
5. पाद्मसंहिता-
6. लक्ष्मीतन्त्रम्-
7. विश्वामित्रसंहिता-
8. विष्णुसंहिता-

9. विष्वक्सेनसंहिता-
10. श्रीप्रश्नसंहिता-
11. सनत्कुमारसंहिता-
12. सात्त्वतसंहिता-
13. यशीर्षसंहिता(आदिकाण्ड)

त्रयोदशसंहिताः शोधपद्धत्यनुशेधेन संशोध्य प्रकाशिताः सन्ति। एतदतिरिक्ततया डा. राघवप्रसादचौधरीमहाभागैः 'भार्गवतन्त्रम्' इत्यभिख्या पञ्चरात्रसंहिता विमर्शपद्धतिमनुसृत्य संशोध्य प्रकाशिता। अन्यासां मुद्रितानां संहितानां शोधपद्धत्यनुरोधेन संस्कृत्य मुद्रापणमपेक्षितमास्ते।

मुद्रिताः पञ्चरात्रसंहिताः अतिरिच्य तालकोशादिषु काश्चन संहिताः संपूर्णतया अंशतो वा उपलभ्यन्ते। एतदतिरिक्ततया उत्सवसंग्रह - प्रतिष्ठासंग्रहाभिधया च विषयसंकलनरूपेणापि उपलभ्यन्ते।

एतासु पञ्चरात्रसंहितासु वासुदेवेन साक्षात् प्रवर्तिताः दिव्याः, ब्रह्मादिभिर्देवैः नारदादिभि· ऋषिभि· प्रणीताः मुनिभाषिता., आप्ततमैर्मनुजैः कृताः मानुषा इति ईश्वरसंहिता पञ्चरात्रसंहिता· वर्गत्रये अवस्थापयति।

गुरुशिष्यपरम्परया समागताः पञ्चरात्रसंहिता· दूरदर्शिनो विद्वांसः तालपत्रादिषु विलिख्य समरक्षन् संरक्षन्ति च। अद्य राजकीयग्रन्थागारेषु आलयार्चकानां गृहेषु च उपलभ्यमाना· सर्वा पञ्चरात्रसंहिताः संशोधनशास्त्रानुगुणं संपाद्य प्रकाशनीयाः सन्ति। पञ्चरात्रसंहितानां प्रकाशनेन प्राचां भारतीयानामास्तिक्यबुद्धिरिदानींतनै सर्वैः सुस्पष्टमवगन्तुं शक्येत।

# द्वितीयोऽध्यायः

## 2. पञ्चरात्रप्रतिपाद्यम्

### 2.0. पञ्चरात्रप्रतिपाद्यविभागः

पञ्चरात्रसंहिताः प्रतिपाद्यमानविषयानुरोधेन ज्ञानपाद - योगपाद - क्रियापाद - चर्यापादभेदेन चतुर्षु पादेषु विभज्यन्ते।

### 2.1. ज्ञानपादः

पञ्चरात्रसंहितासु तत्त्वनिर्णयपरः उपायफलयोः निर्णायकश्च भाग ज्ञानपाद इति व्यपदिश्यते।

### 2.2. योगपादः

पञ्चरात्रसंहितासु ध्यानप्रकारविवेचनपरो भागः योगपाद इति परिगण्यते।

### 2.3. क्रियापादः

पञ्चरात्रसंहितासु आलयस्य भगवद्बिम्बानां निर्माणस्य प्रतिष्ठादेश्च विवरणपरो भागः क्रियापाद इत्युच्यते।

### 2.4. चर्यापादः

पञ्चरात्रसंहितासु आलयेषु भगवतः नित्यनैमित्तिकार्चनप्रक्रियाया उत्सवादिप्रक्रियायाश्च विवरणपरो भागः चर्यापाद इति कथ्यते।

अद्य उपलभ्यमानासु पञ्चरात्रसंहितासु पाद्मसंहितायामेव एते चत्वारः पादाः पार्थक्येनोपलभ्यन्ते। यद्यपि विष्णुतत्त्वसंहितायां प्रथमपाद - द्वितीयपाद - तृतीयपाद - चतुर्थपादभेदेन विभागो दृश्यते तथापि प्रथमपादादौ पाद्मसंहितायां वर्णिताः ज्ञानपादादिविषया एवात्र वर्ण्यन्त इति ज्ञानपादादीनां प्रथमपादादिभेदेन विष्णुतत्त्वसंहितायां व्यपदेशः स्यादित्यूह्यते। अन्यत्र क्वापि पञ्चरात्रसंहितायां प्रतिपाद्यविषयभेदेन ज्ञानपादादिभेदेन पादविभाग. नोपलभ्यते। किं तु तत्र तत्र ज्ञानपादादिषु प्रतिपाद्यमाना· विषया. यथासंभवं प्रतिपाद्यन्ते।

# तृतीयोऽध्यायः

## 3. पञ्चरात्रे ज्ञानपादप्रतिपाद्यम्

### 3.0. पञ्चरात्रसंहितासु ज्ञानपादप्रतिपाद्यम्

ज्ञानपादादिविभागयुतसु ज्ञानपादादिविभागरहितासु च पञ्चरात्रसंहितासु आध्यात्मिकोन्नतिसाधकाः परमात्म - विष्णुशक्ति - जीव - प्रलय - बन्ध तद्धेतु - मोक्ष तदुपायाः सविस्तरमुपपाद्यन्ते। तानधिकृत्यात्र प्रस्तूयते।

### 3.1.0. परमात्मस्वरूपम्

पञ्चरात्रसंहितासु परमात्मनः स्वरूपं बहुधा उपवर्ण्यते।

तथा हि -

पञ्चरात्रे रत्नत्रयत्वेन परिगण्यमानासु सात्त्वत - पौष्कर - जयाख्यासु संहितासु प्रथमायां सात्त्वतसंहितायाम् -

त्रिविधेन प्रकारेण परमं ब्रह्म शाश्वतम्।
आराधयन्ति ये तेषां रागस्तिष्ठति दूरतः ॥[1]

इति परमात्मनस्त्रिप्रकाराराधनमनूद्य,

षाड्गुण्यविग्रहः, भास्वज्ज्वलनतेजाः, सर्वतः पाणिपादः, सर्वतोऽक्षिशिरोमुखः, परशब्दाभिधेयः, सर्वाश्रयः, प्रभुः[2], सर्वग·, परमः,

1. सा. १.२३
2. Ibid. १ २५,६

ज्योतिः, अमूर्त , अमलः, वासुदेवः[3], नारायणः, चिदानन्दघनः[4], शान्तः[5] इति

**जयाख्यसहितायाम् -**

आनन्दस्वरूपः, सर्वहेयविवर्जितः, स्वसंवेद्यः, अनौपम्यः, परा काष्ठा, परा गतिः, सर्वक्रियाविनिर्मुक्तः, सर्वाश्रयः, प्रभुः, अनादिः, अनन्तः, सदसद्भिन्नः, सर्वत्र करवाक्पादः, सर्वतोऽक्षिशिरोमुखः, सर्वतः श्रुतिमान्, सर्वमावृत्य तिष्ठितः, सर्वेन्द्रियैर्भासितः, असक्तः, निर्गुणः, गुणभोक्ता, सर्वस्यान्तर्बहिर्व्याप्तः, चलाचलः, सूक्ष्मः, दूरस्थः, हृत्स्थः, परमात्मा, परः, भूतेभ्यः अविभक्तः, भूतविभक्तः, भूतभृत्, संहर्ता, स्रष्टा, ज्योतिः स्वरूपः, अज्ञानात्परतः स्थितः, ज्ञानज्ञेयात्मकः, ध्येयः, सर्ववर्णरसहीनः, सर्वगन्धरसान्वितः, सर्वज्ञः, सर्वदर्शी, सर्वः, सर्वेश्वरः, सर्वशक्तिमयः, स्वतन्त्रः, परमेश्वरः, सर्वदुःखविवर्जितः[6], अव्ययः, अपरिच्छेद्यः, संविन्मयः, मायारहितः, हृद्धास्यः, सर्वोपाधिविवर्जितः, नारायणः, स्वात्मसंवेद्यः, लक्ष्यः, अनिर्देश्यः, निरुपमकारणस्वरूपः, मानातीतः[7], स्थूलः, सूक्ष्मः परः[8] इति,

**पाद्मसंहितायाम् -**

आनन्दलक्षणः, नादरूपः, अविक्रियः, क्लेशाद्यसंस्पृष्टः, निष्क्रियः, निर्विकल्पकः, अद्वन्द्वः, अनवच्छिन्नः, स्वसंवेद्यः, निरञ्जनः, सुसूक्ष्मः, स्ववशः, स्वैरः, स्वयंज्योतिः, अनादिः, अनन्तः, अक्षयः, शान्तः, अदृष्टान्तः, अवृद्धिमान्, ध्रुवः, एकः, सदानन्दः, चिद्रूपः, सर्वगः, परः, गतागतविनिर्मुक्तः,

3. Ibid. ८.५२,३
4 Ibid १७ ४१९
5 Ibid ६ २१२
6. ज ४. ६०cd-७० *
7 Ibid ४ १०४d, ५, ६cd, ७ab *
8. Ibid ४ २३-५ *

वासुदेवः, विभुः, प्रभवः, सर्वभूतानामीश्वरः, पुरुषोत्तमः, स्वभावनिर्मलः, नित्यः, निस्तरङ्गः, निराकुलः, निर्मर्यादः, गुणातीतः, सगुणः, सर्वकामदः, हीनवर्णैरसंसेव्यः, मोक्षमाणैरतर्कितः, अध्येयः, ध्येयः, आश्चर्यः, अवाङ्मनसगोचरः, षाड्गुण्यविग्रहः, सर्वशक्तिः, स्वाश्रयः, भूतेशः, भूतकृत्, भूतः, तमसः परतः स्थितः, प्रधानः, प्रकृतेरन्यः, भोक्ता, निरङ्कुशः, प्रमाणप्रत्ययातीतः, सर्वतोऽक्षिशिरोमुखः, सर्वतः पाणिचरणः, सर्वमावृत्य विष्ठितः, बहिरन्तःस्थितः, व्यापी, सर्वतन्त्रातिशासनः, अजः, ओंकारः, अव्यक्तः, मूलमन्त्रात्मकः, शिवः, मायारूपः, नित्यतृप्तः, अणोरणुः, महतोऽपि महान्, स्थूलः, अतुलः, मृदुः, दीप्तिमान्, अमूर्तः, मूर्तः, ओजस्वी, चिद्घनः, निरुपद्रवः[9], आदिमध्यान्तरहितः, वृद्धिक्षयरहितः, अच्युतः, नित्यः, निरुपमः, ज्योतिः, नित्यतृप्तः, सर्वाकारः, निराकारः, तमसःपरः, अव्ययः, द्विहस्तः, एकवक्त्रः, शुद्धस्फटिकसंकाशः, सहस्रसूर्यप्रकाशः, वह्निलक्षेन्दुकोटिसमप्रभः, मरीचिचक्रमध्यस्थः, चक्राद्यायुधलाञ्छितः, श्रीवत्सकौस्तुभधारी, वनमालाविभूषितः, किरीटहारकेयूरवलयादिविभूषणभूषितः, पीताम्बरधरः, सनातनः[10], स्थूलः, सूक्ष्मः, परः[11] इति,

**विष्णुतिलकसंहितायाम्**

अव्यक्तः, अच्युतः, आदिमध्यान्तरहितः, अक्षरः, नित्यतृप्तः, निरुपमः, निर्मलः, परमं महः, अविकारः, तमसःपरः, महत्, उष्णरहितः, शीतरहितः, सर्वाकारः, निरामयः, निराकारः, चिद्घनः, स्फटिकप्रभः, अनेकार्केन्दुवह्नीनां तेजोराशिः, अमलः, भानुचक्रान्तरगतः, द्विहस्तः, चक्रधारी, परः, किरीटहारकेयूरश्रीवत्सवनमालिकः, मञ्जीरपीतवसनः, कुण्डलमण्डितः[12],

---

9. पाद्म (ज्ञा) ५.२९-३९ *
10 Ibid. २ ६cd, ११ab *
11. Ibid ६ ३७ab *
12. वि ति २ ५ - १० ab *

अविक्रियः, दिव्यरूप., स्वयंवेद्यः, निरञ्जन·, निर्दोष , अनवच्छिन्नः, अस्पृष्टः, निर्विकल्पक , अद्वन्द्व , अक्षय , शान्त·, अर्कज्योति·, अनामयः, चिदानन्दस्वरूप , अदृष्टान्त·, अबुद्धिमत्, स्वभावनिर्मलः, शुद्धः, गतागतविवर्जित , निर्मर्याद , निस्तरङ्ग , निर्विकारः, निराकुलः, सर्वभूतानां प्रभव , वासुदेवाह्वयं मह·, हीनवर्णैर्मोक्षमाणैरसंसेव्यः,अतर्कितः, ध्येयः, अध्येय·, अगोचरः, प्रधानप्रकृतेरन्य , भोग्य , भोक्तृनिराश्रयः, सर्वतोऽक्षिशिरोवक्त्रः, सर्वतःश्रुतिपाणिपादः, पर·, अन्तर्बहिश्च व्याप्तः,ओंकारः, अक्षरः, व्यक्तः, मायारूपः, शिवंकर·, मूलमन्त्रत्मक·, नित्यः, महतोऽपि महान्, अणोरणुः, मृदोर्मृदुः, अमाय·, मूर्तः, अमूर्तः[13] इति,

**परमसंहितायाम् -**

विष्णु., योगिध्येयः, भक्तिगम्य·, वेदोपनिषत्प्रतिपाद्य·, विराडात्मा, सर्वलोकात्मकः, सर्वलोकाधारः, जगत्प्रभु·, पुरुषोत्तम , नारायणः, वासुदेवः[14] इति,

**अहिर्बुध्न्यसंहितायाम् -**

प्रकृतिगतसत्त्वादिगुणसंवन्धशून्य·, संसारसागरस्यापरपारभूतः, कलङ्करहित , निरञ्जनः, आकारत· देशत· कालतश्च परिच्छेदरहितः, परिपूर्णः, नित्योदित., हेयोपादेयविवेकोज्झितः, इदमीदृगिति परिच्छेत्तुमशक्यः, सर्वात्मक.[15], अपरिच्छेद्यः, कृष्णादिवर्णरहितः, परिमाणरहितः, अनाधेयः, अनाधारः, भावाभावात्मकः, शीतोष्णादिविभागास्पृष्टः, सुखदुःखाद्यनात्मकः, मूलमध्यान्तरहित·, शयनादिचेष्टारहितः, सर्वोपाधिविवर्जितः, षाड्गुण्यः, सर्वकारणकारण·[16] इति,

13 Ibid २ ७५-८२*

14 पर २ १०७ab, १०८-१०*

15 अहि. २ २२-६*

16 Ibid २ ४६-५३*

**लक्ष्मीतन्त्रे -**

निर्दु·खनिरवधिकसुखानुभवात्मक , परमात्मशब्दाभिधेयः, ज्ञानिगम्यः, आत्मा, मोक्षाध्वनःपारं प्राप्य., अनवच्छिन्नः, वासुदेवः, भगवान्, क्षेत्रज्ञः, परमः, विष्णुः, नारायणः, विश्व·, विश्वरूप., अहंतया समाक्रान्तः, शान्त·, निर्विकारः, सनातनः, अनन्तः, देशकालापरिच्छिन्नः, महाविभूतिः, निरालम्बनभावनः, निस्तरङ्गामृताम्भोधिकल्प , षाड्गुण्यः, उज्ज्वल·, चिद्घनः, शान्तः, ब्रह्माद्वैत·[17] इति,

**विश्वामित्रसंहितायाम् -**

भगवान्, एकवक्त्रः, द्विहस्तः, शुद्धस्फटिकसंकाशः, अयुतादित्यवह्नीन्दुकोटिसमप्रभः, दुष्प्रेक्ष्यः, शङ्खच ग., कौस्तुभोरस्क , श्रीनिकेतनः, पीताम्बरधरः, वनमालालंकृतः, किरीटहा यूरकुण्डलविभूषित , वासुदेव·, हृत्पुण्डरीकमध्यस्थः, मुमुक्षुभिर्ध्येयः[18] इ ,

**नारदीयसंहितायाम् -**

सत्त्वस्थः, पुरुषः, शुद्ध., आत्मसंस्थितः, बहिरन्तःस्थित·, सूक्ष्म·, वासुदेवः, परः, शिवः, सर्वकारणभूतः, सर्वशक्तिकलात्मकः, स गः, शान्तः, कलात्मा, पुरुषोत्तमः, सर्वव्यापी, परः, विष्णुः, वासुदेवः निरञ्जनः[19] इति,

**श्रीप्रश्नसंहितायाम् -**

ज्ञानस्वरूपः, जन्ममृत्युजराव्याधिनाशनः, मृत्युतारक·, दुष्प्राप्यः, अनिर्देश्यः, अगम्यः, सर्वव्यापकः, सर्वसाक्षिरूप·, निष्कलः, निर्मलः, शान्त., सर्वातीतः, निरञ्जनः, परं ब्रह्म, सर्वाकार., निराकार·, शुद्धस्फटिकसंनिभः, चतुर्भुजः, वासुदेवः, शङ्खचक्रगदाधरः, आनन्दजलधिः, शुद्धः, निर्गुणः,

17. लक्ष्मी २ १-११ab *
18 विश्वा ४ ५-८ *
19 नार ९ २४-६ *

पीतवासा·, ब्रह्मादिसर्वदेवोत्पत्तिकारणः, स्मितमुखः, पुण्डरीकायतेक्षणः इति परमात्मनः स्वरूपमुपर्णयन्ति[20]।

एतदतिरिक्ततया व्यूह-विभवसंज्ञकं तत्त्वद्वयं सात्त्वतसंहितायाम् -

एतत्पूर्वं त्रयं चान्यज्ज्ञानाद्यैर्भेदितं गुणै· ॥

विद्धि तद्व्यूहसंज्ञं सनि·श्रेयसफलप्रदम्[21]।

इति वासुदेव - संकर्षण - प्रद्युम्न - अनिरुद्धाख्यस्य व्यूहचतुष्टयस्य स्वरूपं निरूप्य,

मुख्यानुवृत्तिभेदेन युक्तं ज्ञानादिकैर्गुणै·।

नानाकृतिं च तद्विद्धि वैभवं भुक्तिमुक्तिदम्[22] ॥

इति च परमात्मरूपतया निर्दिश्यते।

**अत्रेदमवधेयम् -**

यद्यपि 'त्रिविधेन प्रकारेण परमं ब्रह्म शाश्वतम्[23]' इत्यनेन वाक्येन परं ब्रह्म त्रयमुक्तमिति आपाततो भाति तथापि सम्यक्परिशीलने कृते सति ज्ञानैश्वर्यशक्तिबलवीर्यतेजोमयविग्रहं षाड्गुण्यपूरितमेकमेव परशब्दाभिधेयं ब्रह्म आराधकैस्त्रिभिः प्रकारैराराध्यत इत्यत्र तात्पर्यं विद्यते।

तदेव ब्रह्म ज्ञानादिगुणविशेषाधिक्येन क्रमशः संकर्षण - प्रद्युम्न - अनिरुद्धनाम्ना परवासुदेवपूर्वकं व्यूहसंज्ञया व्यवह्रियते। व्यूहसंज्ञया व्यवह्रियमाणे वासुदेव - संकर्षण - प्रद्युम्न - अनिरुद्धचतुष्टये संकर्षणादीनां गुणद्वयप्राधान्येन भेदो गृह्यते।

---

20 श्रीप्र ३ २d - ५a, ९cd - ११ *

21 सा २६cd, ७ab -

22 I bid १ २७

23 I bid १ २३ ab

'एतत्पूर्व त्रय चान्यत्' इत्यत्र व्यूहस्य परवासुदेवपूर्वकत्वकथनात् व्यूहस्य परात् भिन्नता न भवति । एवं विभवसंज्ञमपि शक्तितेज·प्रधानानिरुद्धोत्पन्नम् अनुवृत्तज्ञानादिचतुष्टयं च सत् परब्रह्मणः भिन्नतां न भजते।

तथा च परं ब्रह्म एकमेवेति परिणमति।

उपरि निर्दिष्टेषु पञ्चरात्रसंहितोक्तेषु परमात्मस्वरूपेषु परिशीनितेषु सत्सु परमात्मा -

षाड्गुण्यविग्रहः, भास्वज्ज्वलनतेजाः, सर्वत्र करवाक्पादः, सर्वतोऽक्षिशिरोमुख·, सर्वतःश्रुतिमान्, सर्वाधारः, आनन्दस्वरूपः, सर्वहेयविवर्जितः, स्वसंवेद्यः, अनौपम्य , परा काष्ठा, परा गतिः, सर्वक्रियाविनिर्मुक्तः, प्रभुः, अनादिः, अनन्तः, सदसद्भिन्नः, सर्वमावृत्य तिष्ठितः, असक्तः, निर्गुणः, गुणभोक्ता, सर्वस्यान्तर्बहिर्व्याप्तः, चलाचलः, दूरस्थः, हृत्स्थः[24], परमात्मा, भूतेभ्य· अविभक्तः, भूतविभक्तः, भूतभृत्, संहर्ता, स्रष्टा, ज्योतिःस्वरूपः[25], अज्ञानात्परतः स्थितः, ज्ञानज्ञेयात्मकः, सर्वेन्द्रियभासितः[26], सर्ववर्णरसहीनः[27], सर्वगन्धरसान्वितः, सर्वज्ञः, सर्वदर्शी, सर्वः, सर्वेश्वरः, सर्वशक्तिमयः, स्वतन्त्रः, परमेश्वरः, अनन्तः, सर्वदु·खविवर्जित·, अव्ययः, अपरिच्छेद्यः, संविन्मय·, मायारहितः, सर्वोपाधिवर्जितः, नारायणः, स्वात्मसंवेद्यः, लक्ष्य·, अनिर्देश्यः, निरुपमकारणस्वरूपः, मानातीतः,

---

24. सर्वत्रावस्थितस्य हृत्कमलं स्थानमित्युक्तौ उपलब्धिस्थानमित्यर्थ ।

25. ज्योतिःस्वरूपशब्देन परमात्मन स्वयप्रकाशत्वमुच्यते।

26&27. अत्र सर्वेन्द्रियभासितत्वं सर्ववर्णरसहीनत्व चेत्येवं परस्परविरुद्धधर्मवत्वं परमात्मन· उपनिषत्स्विव समाधेयम्। वर्णरसाद्यभावत्वे सर्वेन्द्रियभासितत्वं विरुद्धम् । अथापि सर्वेन्द्रियैर्भासितमित्यत्र परमात्मन· सर्वात्मकतया प्रपञ्चात्मकत्वमप्युक्तमिति प्रपञ्चस्य इन्द्रियविषयत्वात् तद्द्वारा परमात्मन अपि इन्द्रियविषयत्वमविरुद्धम्।

आदिमध्यान्तरहित., वृद्धिक्षयरहित·[28], अच्युतः[29], नित्यः, नित्यतृप्त.[30], निरञ्जनः, सर्वाकार·, निराकार·, अव्यय., एकवक्त्रः, शुद्धस्फटिकसंकाश·, सहस्रसूर्यप्रकाश., वह्निलक्षेन्दुकोटिसमप्रभः, मरीचिचक्रमध्यस्थः, चक्राद्यायुधलाञ्छितः, श्रीवत्सकौस्तुभधारी, वनमालाविभूषित , किरीटहारकेयूरवलयादिभूषणभूषितः, पीताम्बरधारी, सौम्यः, सनातन·, आद्यः, नादरूप·, अविक्रिय., क्लेशाद्यसंस्पृष्ट., सर्वकारणः[31], निर्विकल्पक·, अद्वन्द्व·, अनवच्छिन्न , स्ववशः, स्वैर·, अक्षय·, शान्त·, ध्रुवः, एक·, चिद्रूप·[32], सर्वग·, गतागतविनिर्मुक्त , वासुदेव·, विभु·, प्रभवः, सर्वभूतानामीश्वर·, पुरुषोत्तमः, स्वभावनिर्मल·, निस्तरङ्गः, निराकुलः, निर्मर्यादः, गुणातीतः, सगुण., सर्वकामद·, हीनवर्णैरसंसेव्यः, मोक्षमार्गैरतर्कित., ध्येयः, अध्येयः, आश्चर्यः, अवाङ्मनसगोचरः, सर्वशक्तिः, स्वाश्रय·, प्रधानप्रकृतेरन्यः, भोक्ता, निरङ्कुश·, प्रमाणप्रत्ययातीतः, सर्वतन्त्रातिशासनः[33], अजः, ओंकार·, अव्यक्त·, मूलमन्त्रात्मक., शिवः, मायारूप·,अणोरणु·, महतोऽपि महान्, मृदु·, दीप्तिमान्, अमूर्त·, मूर्त·, ओजस्वी, निरुपद्रवः, अक्षर·, निर्मल·, परमं महः, निरामय·, दिव्यरूप , अस्पृष्ट·, चिदानन्दस्वरूपः, अबुद्धिमत्, भोग्यः, जगद्व्यापक·, जगदाधार·, जगत्सृष्टिलयकारणं, शीतोष्णरहितः, महत्[34], विष्णु., योगिध्येय·, भक्तिगम्यः, वेदोपनिषत्प्रतिपाद्यः, विराडात्मा, संसारसागरस्यापरपारभूतः, कलङ्करहितः, आकारत· देशतः कालतश्च

---

28&29 वृद्धिक्षयरहित अच्युत इति शब्दाभ्या परमात्मन. अविकार्यत्वमुच्यते।

30 नित्यतृप्तशब्देन परमात्मन आनन्दरूपत्वमुच्यते।

31 सर्वकारणशब्देन सर्वशब्दाभिधेयनामरूपात्मकजगत्कारणत्व परमात्मन उच्यते।

32. चिद्रूप इति शब्देन परमात्मन आनन्दरूपत्वमुच्यते।

33. सर्वतन्त्रातिशासन इति शब्देन परमात्मन विधिविषयातीतत्त्वमुच्यते।

34 विष्णुतिलकसंहितायां परमात्मस्वरूप महदिति शब्देन वर्ण्यते। पर श्रुतिषु महच्छब्देन न परमात्माभिधीयते । महच्छब्दस्यात्र परमात्माभिधान प्रकृतिविकारभूतस्य महत्तत्वस्यापि भगवच्छरीरत्वात्।

परिच्छेदरहितः, परिपूर्णः, नित्योदितः, हेयोपादेयविवेकोज्झितः[35], इदमीदृगिति परिच्छेत्तुमशक्यः, सर्वात्मकः, कालत्रयसंबन्धरहितः, परिमाणरहितः, अनाधेयः[36], अनाधारः[37], भावाभावात्मकः, सुखदुःखाद्यनात्मकः[38], शयनादिचेष्टारहितः, सर्वोपाधिविवर्जितः, सत्त्वादिगुणसंबन्धशून्यः[39], निर्दुःखनिरवधिक-सुखानुभवात्मकः[40], अहंप्रत्ययविषयः, पारं प्राप्यः[41], अनवच्छिन्नः, क्षेत्रज्ञः, परमः, नारायणः, विश्वः, विश्वरूपः, निर्विकारः, सनातनः, अनन्तः, महाविभूतिः, निरालम्बनभावनः, निस्तरङ्गामृतसमुद्रकल्पः, उदयास्तमयरूपः, उज्ज्वलचैतन्यरूपः, ब्रह्माद्वैतः[42], स्थूलः[43], सूक्ष्मः[44], परः[45], भगवान्, एकवक्त्रः, द्विहस्तः, दुष्प्रेक्ष्यः, सत्त्वस्थः, पुरुषः, शिवः, सर्वशक्तिकलात्मकः, सर्वगः, कलात्मा, दुष्प्राप्यः, अनिर्देश्यः, अगम्यः,

---

35. आत्मत्वादेव परमात्मा न हेयः न परित्याज्यः, अत एव नोपादेयः स्वभिन्नं वस्तु उपादीयते न तु स्वम्।

36&37. आधाराधेयरहित इत्युक्तिस्तु परमात्मनः स्वरूपस्य एकत्वमवलम्ब्य।

38. सुखदुःखातीत्वं 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति श्रुत्युक्तप्रियाप्रियस्पर्शरहितं स्वरूपमेव।

39. गुणत्रयसंबन्धरहित इति प्रकृतिविलक्षणं स्वरूपम्।

40. निर्दुःखेत्यादिना निखिलहेयप्रत्यनीकत्वानन्तकल्याणगुणाकरत्व-रूपोभयलिङ्गत्वं परमात्मनः उक्तं भवति। कृष्ण लक्ष्मी टि पृ ६

41 त्रैवर्गिकापेक्षया परमो योऽध्वा मोक्षाध्वा अर्चिरादिः तस्य पारं प्राप्य इत्यर्थः Ibid पृ ६

42 स्वापृथक्सिद्धशक्त्यहताविशिष्टत्वात् तद्विशिष्टं ब्रह्मैकमेव तत्त्वमित्यर्थः Ibid पृ. ६

43 सकलं ज्ञेयं रूपं स्थूलम्। सकलं रूपं नाम सहस्रशीर्षादिमत्त्वम्। स्थूलरूपेण भगवान् स्रष्टा, पालयिता, संहर्ता च।

44 सकलनिष्कलं सूक्ष्मम्। सकलनिष्कलं तु तेजः पुञ्जमिव भासमानं सूक्ष्मरूपेण सर्वभूतानां हृदन्तः निवसति भक्तानामनुग्रहं करोति च।

45 निष्कलं परम्। निष्कलं तु सच्चिदानन्दात्मकम्। व्यापकेनामलेनानन्दात्मकेन पररूपेण अखिलं विस्तारयति।

सर्वसाक्षिरूप·, निष्कल·, चतुर्भुजः, स्मितमुख·, पुण्डरीकायतेक्षण· इति स्वीकरणीयमास्ते।

### 3.1.1. परमात्मस्वरूपनिरूपकाणां शब्दानां श्रुतिस्मृत्याद्यनुगामित्वम्

पञ्चरात्रसंहितासु यद्भगवत स्वरूपं प्रपञ्चितं तत् श्रुतिस्मृत्यादिषु प्रतिपादितमेव भगवत्स्वरूपमनूदितमिव भाति । श्रुतिस्मृत्याद्यनुगामिनः परमात्मबोधकाः शब्दा केचनात्र प्रदर्श्यन्ते। तथा हि -

| | |
|---|---|
| निर्गुणः | निर्गुणं निष्क्रियं सूक्ष्मं[46] |
| अनाद्यनन्तः | न जायते म्रियते वा कदाचित्[47] |
| परा गतिः | सा काष्ठा सा परा गतिः[48] |
| सच्चिदानन्दात्मकः | सत्यं ज्ञानमनन्तं ब्रह्म[49] |
| सर्वस्यान्तर्बहिर्व्याप्तः | अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः[50] |
| आनन्दस्वरूपः | विज्ञानमानन्दं ब्रह्म[51] |
| शान्त | शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेय.[52]। |
| सर्वक्रियाविनिर्मुक्तः | न तस्य कार्यं करणं च विद्यते[53] |

46 उ अ. ६२
47 उ.क १ २ १८
48 Ibid १ ३ ११
49. उ तै २ १
50 उ म ११ ६
51 उ बृ ३ ९.२८
52 उ. माण्डू ७
53 उ श्वे ६ ८

| | |
|---|---|
| निरञ्जन· | निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्[54] |
| सर्वत्र करवाक्पाद. | सर्वतः पाणिपादं तत् |
| सर्वतोऽक्षिशिरोमुख· | सर्वतोऽक्षिशिरोमुखम् |
| सर्वतः श्रुतिमान् | सर्वत. श्रुतिमल्लोके |
| सर्वमावृत्य तिष्ठितः | सर्वमावृत्य तिष्ठति[55] |
| द्वन्द्वातीतः | द्वन्द्वातीतो विमत्सरः[56] |
| { नित्य | नित्य· सर्वगतः स्थाणु- |
| { सर्वगतः | रचलोऽयं सनातनः[57] । |

### 3.1.2. परामात्मस्वरूपनिरूपणपराणां पदानामर्थवैशिष्ट्यम्

जयाख्य[58] - पाद्म[59] - विष्णुतिलक[60] - अहिर्बुध्न्य[61] - विश्वामित्र[62] - परम[63]संहितासु परमात्मास्वरूपनिरूपणपराणां कतीनांचन पदानाम् अर्थविवरणं विलक्षणया रीत्या पाञ्चरात्रिकैरुपवर्ण्यते । तथा हि -

**परमात्मा सर्वपाणिः** चराचरात्मकजगतः परमात्माक्षिप्तत्वात् इति जयाख्यपाद्मसंहिते

54 Ibid ६ १९
55 Ibid ३ १६
56. श्रीमद्भ २.२४ cd
57 Ibid
58. ज. ४ ७५-१०२ ab
59 पाद्म (ज्ञा.) ६ २-२७
60. वि ति २ ८३ - ९४ ab
61 अहि २ २८-३९
62. विश्वा ४ २-४
63 पर २ ९७, ८

| | |
|---|---|
| सर्वपात् | देशकालाविशेषेण युगपत् नैरन्तर्येण परमात्मसंयुक्तत्वात् इति जयाख्य - पाद्म- विष्णुतिलकसंहिताः |
| सर्वतश्चक्षुः | सर्वभासकत्वात्, प्रकाशरूपत्वाच्च इति जयाख्य - पाद्म - विष्णुतिलकसंहिता· |
| सर्वतोमुखः | परमात्मनः पुरत· सर्वेषां वस्तूनां स्थितत्वात् इति पाद्म - विष्णुतिलकसंहिते |
| सर्वशिराः | ज्ञानेन्द्रियाणां शिरस्त्वात् ज्ञानाश्रयत्वाच्च इति पाद्म - विष्णुतिलकसंहिते, परमात्मनि सर्वेषामपि प्राधान्यात् समत्वात् पावनत्वाच्च इति जयाख्यसंहिता, |
| सर्वतःश्रुतिमान् | आरात् दूरे व्याप्तानां शब्दानां श्रुतत्वात् इति पाद्म - विष्णुतिलकसंहिते, सर्वशब्दराशेः परमेश्वरत्वात् इति जयाख्यसंहिता |
| सर्वमावृत्य स्थितः | व्यक्तं सर्वं तादात्म्येनावृत्य अभिन्न इव विद्यमानत्वात् इति जयाख्य - पाद्मसंहिते, |
| अव्यक्तः | विभोरपि तस्य अज्ञानमालिन्येन तिरोहितत्त्वात् इति पाद्मसंहिता, व्यक्ताद्भिन्नत्वादिति विष्णुतिलकसंहिता, रूपविशेषणतया अव्यक्तत्वादिति |

| | |
|---|---|
| | अहिर्बुध्न्यसंहिता |
| **बहिरन्तर्व्यवस्थितः** | जले निमग्नकुम्भस्यान्तर्बहि. जलवत् तस्यापि सर्वस्य जगत· स्थितत्वात् इति जयाख्यपाद्मसंहिते, गुणत्रमसबन्ध-रहितोऽपि तत्संबद्ध इव तस्य वर्तमानत्वत् इति विष्णुतिलकसंहिता, |
| **स्वतन्त्रः** | स्वरश्मीन् स्रष्टुं संहर्तुं च शक्तसूर्यवत् तस्य सृष्टौ संहारे च तस्य स्थितत्वात् इति जयाख्य - पाद्मसंहिते, |
| **सर्वज्ञः** | सर्ववेत्तृत्वात् इति जयाख्यसंहिता, तस्य रूपादीनां ज्ञानस्य चक्षुराद्यधीनत्वादिति पाद्म - विष्णुतिलकसंहिते, |
| **सर्ववर्णरसहीनः** | सितादिवर्णरहितत्वात् नीरूपत्वात् मधुरादिरसरहितत्वाच्चेति जयाख्य-पाद्मसंहिते, |
| **दूरस्थितः** | अज्ञानात् इति जयाख्य - पाद्मसहिते, |
| **हृदि स्थितः** | ज्ञानात् इति जयाख्य - पाद्मसंहिते, |
| **भगवान्** | ज्ञानादिषाड्गुण्यपूरितत्वात् इति पाद्म - अहिर्बुध्न्य - विश्वामित्रसंहिता , |

**अनादिः** — सर्वपूर्वत्वात् पुराणत्वाच्च इति जयाख्य-संहिता; जननाभावादिति विष्णुतिलक-संहिता,

**अनन्तः** — अन्तरहितत्वात् इति जयाख्य-विष्णु-तिलकसहिते; अननाददनाच्च इति अहिर्बुध्न्यसंहिता,

**असन्** — इन्द्रियाणामप्रत्यक्षत्वात् इति जयाख्य-पाद्म-विष्णुतिलकसंहिताः,

**वासुदेवः** — समस्तभूतवासित्वात् इति अहिर्बुध्न्य-संहिता, वासूनां[64] देहिनां सामान्यात् इति परमसंहिता,

**स्वसंवेद्यः** — पुष्पादिगतगन्धसदृशत्वात् इति,

**इन्द्रियगुणैः संयुक्तः तद्वर्जितश्च** — विश्वस्य मायामयत्वात् इति,

**असक्तः** — पद्मपत्रसदृशत्वात् इति ,

**सर्वभृत्** — वैश्वरूप्यात् इति,

**निर्गुणः** — अमोघत्वात् इति,

**गुणभुक्तः** — उदासीनवदासीनत्वात् इति,

**चलाचलः** — घटस्य चलाचलेन आकाशस्य

---

64 सर्वे शरीरिण शरीरे वसनात् वासव इत्युच्यन्ते।

| | |
|---|---|
| | चलाचलत्ववत् विद्यमानत्वात् इति, |
| **सूक्ष्मः** | कालवत् दुर्ज्ञेयत्वात् |
| | सदाऽनुपलम्भमानत्वाच्च इति, |
| **भूतेभ्यः अविभक्तः विभक्तश्च** | आकाशवाय्वोः भेदाभेदवत् विद्यमानत्वात् इति, |
| **भूतभृत्** | ओषधीषु रसस्य स्थावरजङ्गमप्रपञ्चस्य सर्वस्यापि तेन अभिन्नरूपेण पूरितत्वात् इति, |
| **स्रष्टा संहर्ता च** | प्रकाशतमसो: सूर्याधीनत्ववत् सृष्टिसंहारयोः तदधीनत्वात् इति, |
| **ज्योतिषां प्रकाशकः** | मनस: अभावे श्रोत्रादीनां शब्दादिग्राहकत्वाभाववत् ज्योतिषां प्रकाशनसामर्थ्यस्य तदधीनत्वात् इति, |
| **अज्ञानात्परः** | तमोभिन्नालोकवत् स्थितत्वात् इति, |
| **सर्वदर्शी** | सर्वदर्शनात् इति, |
| **ज्ञानवान् ज्ञेयश्च** | वह्नेः ज्वालावत् स्थितत्वात् इति |
| **सर्वेश्वरः** | सर्वज्ञत्वादि साम्यात् इति, |
| **सर्वशक्तिमयः** | सर्वशक्तियुक्तत्वात् षाड्गुण्य-महिमान्वितत्वाच्च इति, |
| **सर्वदुःखवर्जितः** | तृप्तत्वात् इति च जयाख्यसंहिता, |

| | |
|---|---|
| व्यापी | परममहत्संयोगात् इति, |
| अजः | अनादित्वात् इति च पाद्मसंहिता, |
| अमध्यः | आद्यन्तरहितत्वात् इति विष्णुतिलकसंहिता, |
| परमात्मा | पूर्वपूर्वात्मभाविनां तत्त्वानां पारम्येणात्मभावित्वात् इति, |
| आत्मा | जगदाप्तत्वात् इति, |
| सर्वप्रकृतिः | सर्वप्रकृतिशक्तित्वात् इति, |
| प्रधानः | प्रधीयमानकार्यत्वात् इति, |
| नित्यः | नेतृत्वात् अनितृत्वाच्च इति, |
| अपरिमितः | परितः मित्यभावात् इति, |
| अक्षरः | अक्षयात् इति, |
| अरिष्टः[65] | अरिष्टवर्जनात् इति, |
| अच्युतः | अविकार्यत्वात् इति, |
| समः | रागादिदोषरहितत्वात् समधिगोचरत्वात्, (शुद्धान्तकरणगोचरत्वात्) सर्वोपादानसाम्यच्च इति, |
| अचिन्त्यः | ध्यानवर्त्मबहिर्भूतत्वात् अचिन्त्यत्त्वाच्च इति, |

65. अत्र विपरीतलक्षणया अर्थो ग्राह्य., दर्शशब्दवत्।

| | |
|---|---|
| **प्रभवः** | प्रकृष्टभवत्वात् इति, |
| **अव्ययः** | सर्वप्रलयभूमित्वात् व्ययरहितत्वाच्च इति, |
| **ब्रह्म** | बृहत्वात् बृंहणत्वाच्च इति, |
| **कपिलः** | श्रेष्ठविद्यत्वात् इति, |
| **कापिलः** | तेजिष्ठत्वात् इति, |
| **हिरण्यगर्भः** | हितत्वात् रमणीयत्वात् गर्भत्वाच्च (हृदन्तर्गतत्त्वात्) इति, |
| **अपान्तरतपाः** | अपनाशतपोयोगात् इति, |
| **शिवः** | शिवंकरत्वात् इति च अहिर्बुध्न्यसंहिता, |
| **दुष्प्रेक्ष्यः** | तेजोऽतिरेकात् इति विश्वामित्रसंहिता, |
| { **महाविभूतिः** **पुरुषोत्तमः** | सर्वेषां पुरुषाणामुत्कृष्टत्वात् इति, |
| { **नारायणः** **हरिः** | दुःखानां हरणात् इति च परमसंहिता |

परमात्मस्वरूपनिरूपणपराणां शब्दानामर्थं विशदयन्ति।

अनेन एतदवगम्यते यत् परमात्मनः स्वरूपनिरूपणे पञ्चरात्रसंहिताः श्रुतिस्मृतिविलक्षणं च मार्गमनुसरन्ति इति।

इत्थं पञ्चरात्रसंहिताः परमात्मनः निष्कृष्टं ज्ञानमुपकल्पयन्ति।

### 3.1.3.0. भगवतः रूपभेदाः

परं ब्रह्म स्वसंकल्पविशेषेण भक्तानुग्रहाय पर - व्यूह - विभव -

अन्तर्यामि - अर्चाभेदेन पञ्च रूपाणि धत्ते इति सामन्येन पञ्चरात्रसंहिताः कथयन्ति। क्वचित् पुनः पर - व्यूह - विभव - अर्चाभेदेन भगवत चातूरूप्यमेव प्रतिपाद्यते। तदधिकृत्यात्र किंचित् समासेन प्रस्तूयते।

### 3.1.3.1. पररूपम्

निरतिशयानन्दवर्धके अप्राकृते परमपदे श्रीवैकुण्ठे श्रीभूनीलादिभिः परिष्वक्त , चतुर्भुज·, दिव्यमङ्गलविग्रहविशिष्ट , शङ्खचक्रादिदिव्यायुधधरः, दिव्यभूषणैर्भूषित·, अपरिमितपरिजनपरिवृतः, अनन्तगरुडविष्वक्सेनादि नित्यसूरिभिः सेव्यमानः, सहस्रफणामणिमण्डलमण्डिते आदिशेषे दिव्यशय्यायां विराजमान· परवासुदेव एव पररूपत्वेन परिगण्यते । ज्ञानादिषाड्गुण्यस्य स्तिमिततयावस्थानात् परवासुदेव· नित्योदित इति व्यपदिश्यते।

### 3.1.3.2. व्यूहरूपम्

परवासुदेवादाविर्भूतः व्यूहवासुदेव· शान्तोदित इत्युच्यते। व्यूहवासुदेवे षाड्गुण्यं प्रबुद्धमवतिष्ठते। शान्तोदितो व्यूहवासुदेव· षाड्गुण्यमहिम्ना यथायथं शान्तेषु चतुर्षु गुणेषु प्रबुद्धयोश्च द्वयोर्द्वयोर्गुणयोः साहाय्येन संकर्षण - प्रद्युम्न - अनिरुद्धानि त्रीणि रूपाणि स्वीकरोति। एभ्यो वासुदेवादिव्यूहेभ्यः प्रत्येकं त्रयस्त्रयः केशवादयो द्वादशदेवा व्यूहान्तरव्यपदेश्या· अवतरन्ति।

वासुदेव - संकर्षण - प्रद्युम्न - अनिरुद्धाः परवासुदेवस्य व्यूहस्वरूपत्वेन परिगण्यन्ते।

### 3.1.3.3. विभवरूपम्

देवतिर्यङ्मनुष्यसजातीयत्वेन भगवतः अवतार· विभव इत्युच्यते । विभवानामानन्त्यात् परिगणयितुमशक्यत्वेऽपि गौण - मुख्यभेदेन विभवानां द्वैविध्यं पञ्चरात्रसंहिता· कथयन्ति। तत्र अश्रेष्ठ· आवेशावतारः गौणो विभव इति, श्रेष्ठः साक्षादवतारश्च मुख्यो विभव इति च व्यपदिश्यते।

### 3.1.3.4. अन्तर्यामिरूपम्

सकलचेतनहृदयप्रवेशपुरःसरं सकलचेतनप्रवृत्तिनिवृत्तिकारणभूतत्वमन्तर्यामित्वम्। स्वरूपमात्रव्याप्तिः, दिव्यमङ्गलविग्रहविशिष्टस्वरूपव्याप्तिरिति अन्तर्यामित्वं द्विविधम्। आश्रितानाश्रिततारतम्यं विना समस्तचेतनाचेतनेषु व्यापकीभूता व्याप्तिः स्वरूपमात्रव्याप्तिरिति, सज्जनहृदयेष्वेव विद्यमाना भगवतः व्याप्तिः विग्रहविशिष्टव्याप्तिरिति च परिगण्यते।

### 3.1.3.5. अर्चारूपम्

अर्चाशब्दः प्रतिमावाचकः। भगवच्चरणारविन्दे अविच्छिन्नां भक्तिं निदधानैः भागवतैः स्वर्णादिलोहैः शिलादारुमृत्तिकाभिर्वा स्वसंकल्पानुरोधेन निर्मापिते बिम्बे आवाहितस्य भगवतो रूपमर्चारूपमिति परिगण्यते।

इत्थं पर - व्यूह - विभव - अन्तर्यामि - अर्चाभेदेन पञ्चविधं स्वरूपमापन्नस्यापि भगवतः एतेषां यस्य कस्यापि अभीष्टस्य स्वरूपस्य पूजनं भक्तानां श्रेयस्करमिति पञ्चरात्रसंहिताः उपदिशन्ति।

### 3.1.4.0. भगवतः षाड्गुण्यम्

भगवान् षाड्गुण्यपूर्ण इति पञ्चरात्रसंहिताः निर्दिशन्ति। ज्ञानादिषड्गुणा एव षाड्गुण्यपदेनात्र कथ्यन्ते। परब्रह्मणो भगवतो वासुदेवस्य अनन्तकल्याणगुणेषु प्रथिताः ज्ञान - शक्ति - ऐश्वर्य - बल - वीर्य - तेजः - संज्ञकाः षड्गुणाः परवासुदेवे व्यूहवासुदेवे प्रधानतया उपवर्ण्यन्ते। ते ज्ञानादयो गुणा अत्र समासेन प्रस्तूयन्ते।

### 3.1.4.1. ज्ञानम्

ज्ञानशब्देन ज्ञानस्वरूपत्वं ज्ञानगुणकत्व च विवक्षितम्। तथा च अजडम्, स्वयंप्रकाशम्, नित्यम्, सर्वविषयकं च ज्ञानं ब्रह्मणः गुण स्वरूप

चेत्यङ्गीक्रियते। परं ब्रह्म ज्ञानात्मकम् अजडत्वात् स्वयंप्रकाशकत्वाच्च[66]।

ज्ञानादिगुणेषु षट्सु ज्ञानं ब्रह्मण. स्वरूपनिरूपक· धर्मः। इतरे गुणास्तु ज्ञानेन निरूपिते स्वरूपे विशेषणभूता गुणा· । अत एव ज्ञानाख्यं ब्रह्म इति कथ्यते[67]।

### 3.1.4.2. शक्तिः

जगत्प्रकृतित्वं[68], देव्या जगत्प्रकृतिभावत्वं[69] वा शक्तिरित्यभिधीयते।

### 3.1.4.3. ऐश्वर्यम्

स्वातन्त्र्येण जगत्कर्तृत्वम्[70], उद्यत्याः सिसृक्षाशक्तेरव्याहतिर्वा[71] ऐश्वर्यमित्यभिधीयते।

### 3.1.4.4. बलम्

जगत्सृष्टिप्रयुक्तश्रमशून्यत्वं[72] कार्यस्य भरणं[73] वा बलमित्युच्यते।

---

66. अजड स्वात्मसबोधि नित्य सर्वावगाहनम्।
ज्ञान नाम गुण प्राहु· प्रथम गुणचिन्तका. ॥
स्वरूप ब्रह्मणस्तच्च गुणश्च परिगीयते। — अहि. २.५६, ७ ab

67. लक्ष्मी. २ २४-७

68. जगत्प्रकृतिभावो य· सा शक्ति परिकीर्तिता॥ — अहि. २ ५७ cd
प्रकृतित्व नाम उपादानकारणत्वम्।

69. जगत्प्रकृतिभावो मे य· सा शक्तिरितीर्यते। — लक्ष्मी. २. २९ ab

70. कर्तृत्व नाम यत्तस्य स्वातन्त्र्यपरिबृहितम्।
ऐश्वर्य नाम तत्प्रोक्तं गुणतत्त्वार्थचिन्तकैः॥ — अहि २ ५८
इदमेव निमित्तकारणमित्याहुः वेदान्तिन.

71. अव्याहतिर्यदुद्यत्यास्तदैश्वर्य पर मम।
इच्छेति सोच्यते तत्तत्तत्त्वशास्त्रेषु पण्डितै· ॥ — लक्ष्मी २ २८

72. श्रमहानिस्तु या तस्य सततं कुर्वतो जगत्।
बल नाम गुणस्तस्य कथितो गुणचिन्तकै. ॥ — अहि २ ५९

73. भरण यच्च कार्यस्य बल तच्च प्रचक्षते।
शक्त्यशकेन तत्प्राहुर्भरण तत्त्वकोविदा ॥ — लक्ष्मी २ ३०

## 3.1.4.5. वीर्यम्

ब्रह्मणः विकाराभावः[74], ऐश्वर्यभूतो विक्रमो[75] वा वीर्य[76]मिति कथ्यते।

## 3.1.4.6. तेजः

सहकार्यान्तरनिरपेक्षं[77], पराभिभवसामर्थ्यं[78] वा तेजः इति कथ्यते।

एषु षट्सु गुणेषु शक्त्यादयः पञ्च गुणाः ज्ञानस्यैव अवस्थाविशेषाः। ज्ञानं पुनः ब्रह्मणः स्वरूपमेव[79]।

ज्ञानादिभिः षड्भिः गुणैर्युक्तत्वादेव परमात्मा भगवच्छब्देनाभिधीयते।

सर्वेश्वरस्य परत्वस्थापनाय ज्ञानादयः षड्गुणाः उपयुज्यन्ते। परत्वस्थापकाश्च इमे षड्गुणाः भगवत्स्वरूपमाश्रित्य तिष्ठन्ति। पर-व्यूहादि - भगवद्रूपविशेषानुसंधानाय ज्ञानादिगुणविशेषा नियताः भवन्तीति पाञ्चरात्रिका अभिप्रयन्ति।

## 3.2.0. विष्णुशक्तिः

ज्ञानादिषड्गुणातिरिक्ततया परब्रह्मणि विष्णुशक्तिसंज्ञया प्रथितं किंचित्तत्वं संगतं वर्तत इति पञ्चरात्रसंहिताः निर्दिशन्ति।

तथा हि -

ज्ञानस्वरूपस्य देशकालादिपरिच्छेदरहितस्य निर्गुणस्य निरञ्जनस्य

---

74 तस्योपादानभावेऽपि विकारविरहो हि यः।
वीर्यं नाम गुणः सोऽयमच्युतत्वापराह्वयम्॥ अहि. २.६०

75 विक्रमः कथितो वीर्यमैश्वर्यांशः स तु स्मृत । लक्ष्मी. २.३३ ab

76 वीर्यमेव अच्युतत्वमित्याख्यायते वेदान्तिभिः।

77 सहकार्यनपेक्षा या तत्तेजः समुदाहृतम्। अहि २.६१ ab

78. पराभिभवसामर्थ्यं तेज केचित्प्रचक्षते॥ लक्ष्मी. २ ३४ cd

79 एते शक्त्यादयः पञ्च गुणा ज्ञानस्य कीर्तिताः॥
ज्ञानमेव पर रूप ब्रह्मण परमात्मन । अहि २ ६१ cd, २ ab

सुखस्वरूपस्य सदैकरूपस्य षाड्गुण्यरूपस्य अजरामरस्य च भगवतः परमा शक्तिः अहंता[80]। विष्णुसामर्थ्यरूपाया अहंतायाः विष्णुशक्तिरिति लक्ष्मीरिति वा अभिख्या प्रवर्तते[81]। पञ्चरात्रागमे शक्तिमत् नारायणाख्यं परं ब्रह्म भवच्छब्देन, नारायणी शक्त्यहतादिशब्दवाच्या लक्ष्मी. भावशब्देन चाभिधीयते[82]। शक्त्या विना शक्तिमान् वा, शक्तिमता विना शक्तिर्वा नावतिष्ठत इति प्रथितं किंचित्तत्त्वमास्ते । अन्योन्याविनाभावात् अन्योन्यसमन्वयाच्च भगवतो लक्ष्म्याश्च अपृथक्स्थिति. पाञ्चरात्रिकै रभ्युपगम्यते । लक्ष्मीतन्त्रे अपृथग्भूतशक्तित्वात् परं ब्रह्म 'ब्रह्माद्वैत'पदेन निर्दिश्यते । स्वापृथक् सिद्धशक्त्यहंताविशिष्टं ब्रह्मैकमेव तत्त्वमिति 'ब्रह्माद्वैत' शव्दस्यास्यार्थ.।

तावावां तत्त्वमेकं तु द्विधाभूतौ व्यवस्थितौ[83] ॥

सैषा नारायणी देवी स्थिता नारायणात्मना ।

पृथग्भूतापृथग्भूता ज्योत्स्नेव हिमदीधिते [84] ।

इत्यादीनि लक्ष्मीतन्त्रवचनानि अस्योपोद्बलकानि वर्तन्ते । वैष्णवीशक्तिः शक्तिमतः ब्रह्मणः भिन्ना, ब्रह्मणः धर्मभूतेति च कथ्यते। धर्मधर्मिरूपेण शक्ति - शक्तिमतोर्भिन्नत्वाङ्गीकारेऽपि धर्मधर्मिरूपौ शक्ति शक्तिमन्तावेतौ अपृथक्स्थितौ

---

80 ज्ञानस्वरूपो भगवान् देशकालाद्यभेदित. ।
वासुदेवः परं ब्रह्म गुणशून्य निरञ्जनम् ॥
सुख सदैकरूप तु षाड्गुण्यमजरामरम् ।
तस्याह परमा शक्तिरहंता शाश्वती ध्रुवा ॥ लक्ष्मी १४ १,२
वासुदेवः पर ब्रह्म नारायणमहं महत् ।
तस्याहं परमा शक्तिरहतानन्दचिन्मयी ॥ Ibid १५ ९

81 विष्णोः सामर्थ्यरूपत्वाद्विष्णुशक्ति. प्रगीयते । अहि ३ ११ ab

82. भवन्नारायणो देवो भावो लक्ष्मीरह परा ॥ लक्ष्मी २ १५ cd

83 Ibid १५. १० cd

84 Ibid १ ४३ cd, ४ ab

सन्तौ एकतत्त्वत्वेन शास्त्रेषु कथ्येते इति पञ्चरात्रसंहितासु शक्ति - शक्तिमतोर्भेदाभेदौ विविच्येते[85]। तथा च लक्ष्मीतन्त्रे - परब्रह्मशक्तिभूताया· परब्रह्मस्वरूपनिरूपकधर्मरूपायाश्च श्रिय जगत्सृष्ट्यादिकर्तृत्वं तद्धर्मिणि भगवत्येव पर्यवस्यतीत्युच्यते। यथा -

व्यापारस्तस्य देवस्य साहमस्मि न संशयः॥

मया कृतं हि यत्कर्म तेन तत्कृतमित्युच्यते।

अहं हि तस्य देवस्य स्मृता व्य[illegible]यमाणता[86]।

इति।

किं च, ईश्वरस्य जगत्सृष्ट्यादिव्यापारे सह[illegible]ार्यपेक्षणे स्वातन्त्र्यस्य कर्तृत्वस्य च न हानिः। तदुक्तं पं. कृष्णमाचार्यैः लक्ष्[illegible] [illegible]न्त्रोपोद्धाते -

कर्तुः सहकार्यपेक्षा न दोषाय। न हि कुलाल[illegible] घटकरणे मृच्चक्रादिसापेक्षत्वे न तत्र स्वातन्त्र्यं कर्तृत्वं वापैति। कर्तृत्व - मस्तु, स्वातन्त्र्यं मास्त्विति तु न चोदनीयम्, स्वातन्त्र्यघटितत्वात् कर्तृत्वस्य। 'स्वतन्त्रः कर्ता' (अष्टा, 1-4-54) इति हि शब्दस्मृतिः। उक्तं च देव्यैव - 'कर्तुश्च करणापेक्षा न स्वातन्त्र्यविघातिनी' (ल. त. 3.35) इति[87]

इति।

---

85 देवाच्छक्तिमतो भिन्ना ब्रह्मण. परमेष्ठिन ।
एषा चैषा च शास्त्रेषु धर्मधर्मिस्वभावत.॥
भवद्भावस्वरूपेण तत्त्वमेकमिवोदितौ। अहि ३ २५, ६ ab

86. लक्ष्मी ११ ६ cd, ७

87 पृ. ३३, ४

जगन्निर्माणशक्तिरूपायाः अहंतापरपर्यायाः लक्ष्म्याः स्वरूपं लक्ष्मीतन्त्रे १४ अध्याये विस्तरेणोपवर्ण्यते । अहिर्बुध्न्यसंहितायाः परमात्मानुगायाः विष्णुशक्तेः आनन्दादिपदाभिधेयत्वमुच्यते[88]।

इयं च विष्णुशक्तिः न प्रत्यक्षगम्या, किं तु कार्यानुमेया, अपर्यनुयोज्यस्वभावा च । सैव विष्णुशक्तिः निमेषोन्मेषरूपेण प्रपञ्चस्य भावाभावयोः परमात्मानुगा भवतीति पञ्चरात्रसंहितासु प्रतिपाद्यते[89]।

### 3.2.1. विष्णुशक्तिनिरूपणपराणां पदानामर्थवैशिष्ट्यम्

विष्णुशक्तिस्वरूपम् उपवर्णयितुं प्रयुक्तानां पदानाम् अर्थविशेषाः पञ्चरात्रसंहितासु निर्दिश्यन्ते[90]। तथा हि -

| | | |
|---|---|---|
| **आनन्दः** | निरपेक्षत्वात् | इति अहिर्बुध्न्यसंहिता |
| **स्वतन्त्रा** | नित्यपूरणात् | ” |
| **पूर्णा** | आकारविरहात् | ” |
| **व्यापिनी** | देशपरित्यागविरहात् | ” |

---

88. अहि ३.७-२१
89. शक्तयः सर्वभावानामचिन्त्या अपृथक्स्थिताः ।
स्वरूपे नैव दृश्यन्ते दृश्यन्ते कार्यतस्तु ताः ॥
सूक्ष्मावस्था हि सा तेषां सर्वभावानुगामिनी ।
इदंतया विधातुं सा न निषेद्धुं च शक्यते ॥
सर्वैरननुयोज्या हि शक्तयो भावगोचराः ।
एवं भगवतस्तस्य परस्य ब्रह्मणो मुने ॥
सर्वभावानुगा शक्तिर्ज्योत्स्नेव हिमदीधितेः ।
भावाभावानुगा तस्य सर्वकार्यकरी विभोः ॥
स्वातन्त्र्यरूपा सा विष्णोः प्रस्फुरन्ती जगन्मयी ।
उदितानुदिताकारा निमेषोन्मेषरूपिणी ॥ Ibid ३. २-६
90. अहि. ३. ७-२१, लक्ष्मी ४ ४२-५२

| | | |
|---|---|---|
| **लक्ष्मीः** | जगत्स्वरूपेण लक्ष्यमाणत्वात् | इति अहिर्बुध्न्यसंहिता |
| **पद्मा** | अव्यक्त-काल-पुरुषस्वरूपत्वात् | ,, |
| **कमला** | कामप्रदानात् पर्याप्तसुखयोगाच्च | ,, |
| **विष्णुशक्तिः** | विष्णोः सामर्थ्यरूपत्वात् | ,, |
| **विष्णुपत्नी** | विष्णोः भावपालनात् | ,, |
| **कुण्डलिनी** | जगदाकारेण संकोचात् | ,, |
| **अनाहता** | मनोवागादीन्द्रियवश्यरहितत्वात् | ,, |
| **गौरी** | शुद्धसत्त्वाश्रयात् | ,, |
| **अदितिः** | अविशेषणत्वात् | ,, |
| **मही** | सर्वपुण्यकरीत्वात् | ,, |
| **अनाहतशीर्ष्णी** | अभ्युदयाहतिविरहात् | ,, |
| **जगत्प्राणा** | स्वसंवेदनेन जगत्प्राणनात् | ,, |
| **मन्त्रमाता** | पराहतसुरुपत्वात् | ,, |
| **गायत्री** | गायतः सर्वान् त्राणनात् | ,, |
| **माता** | जगत् मिमीते परिच्छिनत्ति तता व्याप्ता च इति हेतोः | ,, |
| **शिवा** | सर्वेषां शिवंकरत्वात् | ,, |
| **तरुणी** | काम्यमानत्वात् | ,, |
| **तारा** | संसारतारणात् | ,, |

| | | |
|---|---|---|
| **सत्या** | अविपर्यासरूपत्वात् | इति अहिर्बुध्न्यसंहिता |
| **मोहिनी** | मोहनात् मोहापनयनाच्च | ,, |
| **इडा** | हविरधिष्ठानात् | ,, |
| **विश्रुता** | सद्भिः विशेषेण श्रुतत्वात् | ,, |
| **सरस्वती** | स्मारयन्तीति हेतोः | ,, |
| **महाभासा** | निरवच्छिन्नप्रकाशमानत्वात् | ,, |
| **प्रकृतिः** | जगत् प्रकारोतीति हेतोः | इति अहिर्बुध्न्यसंहिता लक्ष्मीतन्त्रं च |
| **शान्ता** | अशेषविकारशून्यत्वात् | इति अहिर्बुध्न्यसंहिता लक्ष्मीतन्त्रं च |
| **श्रीः** | विष्णोः स्वरूपं श्रयतीति हेतोः इति अहिर्बुध्न्यसंहिता, श्रयणीयत्वात् सतां दुरितनाशनात्, करुणवाक्छ्रवणात्, जगत्प्रीणनात्, सर्वभूतानामन्तर्वर्तित्वाच्च इति लक्ष्मीतन्त्रं[91] | |
| **महालक्ष्मीः** | त्रिगुणजगत्सृष्टिकर्तृत्वात् | इति लक्ष्मीतन्त्रं |
| **महाश्रीः** | महद्भिः श्रयणीयत्वात् | ,, |
| **चण्डी** | चण्डस्य दयिता इति हेतोः | ,, |
| **चण्डिका** | चण्डत्वात् | ,, |

91. 'श्रि श्रयणे' 'शॄ हिंसायाम्' 'श्रु श्रवणे' 'शॄ प्रीणने' 'शी स्वप्ने' 'रम् क्रीडायाम्' इति धातवो विवक्षिता । सर्वभूतानामन्तर्वर्तित्वात् श्री इत्यत्र श्रीनाम्नि शकारविवरणम् - शयेऽन्तरिति। रेफविवरणम् - रमेऽहमिति। - कृ लक्ष्मी टि. पृ १६

| | | |
|---|---|---|
| **भद्रा** | कल्याणरूपत्वात् | इति लक्ष्मीतन्त्रं |
| **काली** | सतां कलनात् द्विषतां कालरूपत्वाच्च | ,, |
| **भद्रकाली** | सुहृदां द्विषतां च युगपत्सदसत्करणात् | ,, |
| **माया** | आश्चर्यावहत्वात् | ,, |
| **महामाया** | महत्वात् | ,, |
| **दुर्गा** | दुर्गमत्वात् | ,, |
| **योगमाया** | योजनात् | ,, |
| **मायायोगा** | नृणां ज्ञानयोजनात् | ,, |
| **भगवती** | पूर्णषाड्गुण्यरूपत्वात् | ,, |
| **भगवत्पत्नी** | भगवद्यज्ञसंयोगात् | ,, |
| **व्योम** | विशालत्वात् | ,, |
| **पुरी** | पूरणात् | ,, |
| **परावरा** | परावरस्वरूपत्वात् | ,, |
| **शक्तिः** | शकनात् | ,, |
| **राज्ञी** | रञ्जनात् | ,, |
| **त्रिगुणा** | गुणत्रयाधिष्ठातृत्वात् | ,, |

च विष्णुशक्तिनिरूपणपराणां शब्दानामर्थं विशदयति।

### 3.2.2.0. विष्णुशक्तेः पञ्च कर्माणि

पाञ्चरात्रागमेषु श्री. विष्णुशक्तिरिति व्यपदिश्यते । तस्याः तिरोभावशक्तिः सृष्टिशक्तिः स्थितिशक्तिः संहृतिशक्ति अनुग्रहशक्तिरिति पञ्च

कर्माणि पाञ्चरात्रसंहितासूपवर्ण्यन्ते[92]। एतत्कर्मपञ्चकमेव चिच्छक्तिरूपस्य जीवस्य सुखदु·खादिहेतुत्वेन निर्दिश्यते । तिरोभावप्रभृति कर्मपञ्चकं पाञ्चरात्रसंहितासु विस्तरेण वर्ण्यते। यथा -

### 3.2.2.1. तिरोभावशक्तिः

चिच्छक्तिः भोक्तृतां गता यया शक्त्या प्रकृतेर्वशे वर्तते सा तिरोभावशक्तिरिति अविद्याशक्तिरिति वा कीर्त्यते[93]। अस्या अविद्या, अस्मिता, रागः, द्वेषः, अभिनिवेश इति पञ्च पर्वाणि भवन्ति[94]। तत्र,

अनात्मनि देहादौ जीवस्य अहंबुद्धिः अविद्येति[95]

अहंतया गृहीते देहादौ अभिमान· अस्मितेति, मोह इति, महामोह इति वा[96]।

अस्मितया आहिता सुखानुस्मृतिहेतुः वासना राग इति[97]।

92 तस्या मे पञ्च कर्माणि नित्यानि त्रिदशेश्वर।
तिरोभावस्तथा सृष्टि स्थिति सहृतिरेव च।।
अनुग्रह इति प्रोक्त मदीय कर्मपञ्चकम्। लक्ष्मी. १२.१३,४

93 तत्र नाम तिरोभावोऽन्यद्भाव परिकीर्त्यते।
स्वच्छापि सा मदीया हि चिच्छक्तिर्भोक्तृसज्ञिता।।
मदीयया यया शक्त्या वर्तते प्रकृतेर्वशे।
तिरोभावाभिधाना मे साविद्याशक्तिरुच्यते।। Ibid १२ १५,६

94. Ibid १२.२०

95 तमस्तु प्रथम पर्व नामाविद्येति तस्य तु।
आनात्मन्यस्वभूते च चैत्ये जीवस्य या मति· ।।
स्वतयाहतया चैव तमोऽविद्या च सा स्मृता। Ibid १२.२१, २ab

96 स्वीकृतेऽहतया चैत्ये मानो यस्तत्र जायते।।
अस्मिताख्यो महामोहो द्वितीयं क्लेशपर्व तत्।
चैत्यचेतनयोरेकभावापत्तिरविद्यया।।
मोहोऽस्मिता महामोह इति शब्दैर्निगद्यते।। Ibid १२.२२cd, ४ab

97. सुखानुस्मृतिहेतुर्या वासनास्मितयाहिता।।
स रागो रञ्ज्यविषयस्तृतीयं क्लेशपर्व तत्। Ibid १२ २६cd, ५ab

दुःखानुस्मृतिहेतुः वासना द्वेष इति[98],

दुःखजिहासासुखप्रेप्सयोर्मध्ये संभवन् वित्रास अभिनिवेश इति च परिगण्यते[99]।

अविद्यादितिरोभावशक्तिपर्वणामेषां निवृत्तये इष्टप्राप्तये अनिष्टविघाताय च चेतनः कर्म कुर्वन् सुखं-दुःखम् उभयात्मकं त्रिविधं फलं प्राप्नोति। सुख-दुःख - उभयात्मकत्रिविधफलमेव त्रिविधविपाकत्वेन परिगण्यते[100]। क्लेश-कर्म - त्रिविधविपाकजाः वासनाशब्दिताः संस्काराः आसमन्तात् अन्तःकरणे शेरते इति व्युत्पत्त्या आशया इति कथ्यन्ते[101]।

### 3.2.2.2. सृष्टिशक्तिः

सृष्टिशक्तिः शुद्धसृष्टिः अशुद्धसृष्टिरिति सृष्टिद्वयस्य कारणतां वहति। व्यूह- व्यूहान्तर - विभव - विभवान्तर - अर्चारूपाणां सृष्टिरेव शुद्धसृष्टिरिति परिगण्यते।

पर्वत्रये विभक्ता अशुद्धसृष्टिः[102] प्रजापतिना निरन्तरं क्रियमाणा

---

98 दु खानुस्मृतिहेतुर्या वासनास्मितयाहिता ॥
स द्वेषो द्वेष्यविषयश्चतुर्थ क्लेशपर्व तत्। Ibid १२ २५cd, ६ab

99 दुख जिहासतो योगै प्रेप्सतश्च सुख तथा ॥
तदन्तरायैर्वित्रासो मध्ये यो नाम जायते।
अन्धाख्योऽभिनिवेश स पञ्चम क्लेशपर्व तत् ॥ Ibid १२ २६cd, ७

100. तत्प्रसूत सुख दु ख तथा दु खसुखात्मकम्।
विपाकस्त्रिविध. प्रोक्तस्तत्त्वशास्त्रविशारदै ॥ Ibid १२.३१

101. वासना आशया प्रोक्ताः क्लेशकर्मविपाकजा ।
अन्त·करणवर्तिन्य· समन्ताच्छेरते हि ता ॥
जायन्ते वासना नित्य पञ्चभि क्लेशपर्वभि ।
सदृशारम्भहेतुश्च वासना कर्मणा तथा। Ibid १२ ३२,३

102. Ibid ५.

शक्त्यादिषट्कोशसंभवा षड्विधा चेति पुन· प्रकारान्तरेण सप्तधा संपद्यते[103]। तत्र प्रकृतिकोशजा सृष्टिः भाविकी, लैङ्गिकी, भौतिकी चेति त्रिधा संभवति[104]। तत्र प्रकृतौ महदादितत्त्वानां स्थिति· भाविकीसृष्टिरिति[105], समष्टिव्यष्टिलिङ्गानां भूतानां विराडादीनां च सृष्टि· लैङ्गिकीसृष्टिरिति[106] शरीरिणां जरायुज - अण्डज- स्वेदज - उद्भिजानां भौतिकीसृष्टिरिति[107] च परिगण्यते।

## 3.2.2.3. स्थितिशक्तिः

सृष्टिशक्तेरन्त्यक्षणात् संहृतिशक्तेराद्यक्षणं यावत् प्रवर्तमाना शक्तिः स्थितिशक्तिरित्युच्यते[108]।

## 3.2.2.4. संहृतिशक्तिः

सृष्टानां संहारकारणं शक्ति· संहृतिशक्तिरिति व्यपदिश्यते। नित्या, नैमित्तिकी, प्राकृती, प्रासूती, मायी, शाक्ती, आत्यन्तिकी चेति संहृतिशक्ति· सप्तधा परिगण्यते।

---

103. . . सा पुन सप्तधा स्थिता।
अनिश क्रियते त्वेका प्राजापत्येन कर्मणा ॥
षट्कोशसभवास्त्वन्यास्तत्तत्कालसमुद्भवा । Ibid १२ ३७bcd, ८ab

104. सर्गक्रमे प्रकृत्युत्थे सृष्टिर्ज्ञेया त्रिधा पुन ॥
भाविकी लैङ्गिकी चैव भौतिकी चेति भेदत । Ibid १२ ३८cd, ९ab

105. यथा न्यग्रोधधानायां त्रैगुण्ये प्रकृतौ तथा ॥
या स्थितिर्महदादे सा भावसृष्टिर्निगद्यते। Ibid १२.३९cd, ४०ab

106 समष्टिव्यष्टिभेदेन लिङ्ग यत्सृज्यते मया ॥
विराजश्च तथान्येषा भूताना लिङ्गजा तु सा। Ibid १२ ४०cd, १ab

107 चतुर्विधानि चान्यानि शरीराणि शरीरिणाम्।
एषा मे भौतिकीसृष्टि . . ॥ Ibid १२.४७abc

108 आद्यसृष्टिक्षणो यस्तु संजिहीर्षाक्षणश्च य ।
यत्स्थैर्यन्तरणं नाम तयोरन्तरवर्तिनाम् ॥
नानारूपैर्मदीयै सा स्थितिशक्ति परा मम। Ibid १२.४९, ५०ab

जरायुजादीनां भूतानां नित्यं विनाशः नित्यसंहृतिरिति, ब्रह्मप्रस्वापहेतुता त्रैलोक्यविषया संहृतिः नैमित्तिकीति, महदादीनां संहृतिः प्राकृतसंहृतिरिति, अव्यक्तस्य संहृतिः प्रांसूतीति, प्रसूतेः संहृति· मायीति, मायायाः संहृतिः शाक्ती इति, योगिनां परमात्मनि विलयाख्यः मोक्षः आत्यन्तिकीति च संहृतिशक्तिरिति परिगण्यते[109]।

### 3.2.2.5. अनुग्रहशक्तिः

अनुग्रहशक्तिः शक्तिपात इत्यपि व्यवह्रियते। अविद्याविद्धः लक्ष्म्याः तिरोधानशक्त्या अभिभूतः जीवः विविधक्लेशभाग्भवति । अयं च स्वकर्मानुसारेण सुखदुःखादिकमनुभवति। कर्मफलभोगाय विविधजन्मसु भ्रमतः जननमरणप्रवाहे निमग्नस्य भवसागरं तर्तुमिच्छत· जीवस्य करुणापूरितदृष्ट्या लक्ष्म्या वीक्षणमेव अनुग्रहात्मिकाशक्तिरिति व्यपदिश्यते[110]।

---

109. Ibid १२.५२cd

110. अनुग्रहात्मिका शक्र शक्तिर्मे पञ्चमी स्मृता।
. . .  . . .  .  . . ॥
अविद्यया समाविद्धा अस्मितादिवशीकृता ।
मच्छक्त्यैव तिरोभूतास्तिरोधनाभिधानया॥
.  . .  . . .  .॥
निबद्धास्त्रिविधैर्बन्धै स्थानत्रयविवर्तित ॥
ससाराङ्गारमध्यस्था. पच्यमाना स्वकर्मणा।
सुखाभिमानिनो दु खे नित्यमज्ञानधर्षिता ॥
ता योनीरनुधावन्तश्चराचरविभेदनी ।
अपूर्वापूर्वभूताभिश्चित्रिताभि स्वहेतुभि.॥
देहेन्द्रियमनोबुद्धिवेदनाभिरहर्निशम्।
जननानि प्रबध्नन्तो मरणानि तथा तथा॥
क्लिश्यमाना इति क्लेशैस्तैस्तैर्योगवियोगजै ।
उद्यत्कारुण्यसतानर्निर्वापिततदागसा॥
मया जीवा समीक्ष्यन्ते श्रिया दु खविवर्जिता ॥
सोऽनुग्रह इति प्रोक्त शक्तिपातापराह्वय ॥ Ibid १३ १-८

### 3.2.3.0. विष्णुशक्तेः षट्कोशाः

पञ्चरात्रसंहितासु षट्कोशसंज्ञकं किंचित्तत्त्वमुपपाद्यते । परब्रह्मणो वासुदेवस्य अहंतापराभिधाना लक्ष्मी· सिसृक्षारूपा क्वचिदुच्छूनतां गता षट्कोशतां समापद्यते। कुलायः शरीरं वा कोश इति व्यपदिश्यते[111] । शक्तिकोशः, मायाकोशः, प्रसूतिकोश·, प्रकृतिकोश , ब्रह्माण्डकोशः, जीवदेहकोश· इत्येवं कोशः षोढा भिद्यत इति पाञ्चरात्रसहितासूपपाद्यते[112] । तथा हि -

### 3.2.3.1. शक्तिकोशः

शक्तिकोश· शुद्धसृष्टिं प्रवर्तयतीति पाञ्चरात्रसिद्धान्तो वर्तते[113] । शुद्धचैतन्यस्वरूपाणां जीव - मनोऽहंकाराभिमानिनां संकर्षणप्रद्युम्नानिरुद्धानां सपत्नीनां, सपत्नीकस्य वासुदेवस्य च आविर्भाव एव शक्तिकोश इति पाञ्चरात्रसंहिताः निर्दिशन्ति[114]।

### 3.2.3.2. मायाकोशः

मायाकोशादिपञ्चकोशेभ्यः अशुद्धसृष्टि· प्रवर्तते। अनिरुद्धस्य पत्नी रतिरेव महालक्ष्मीः अत्राविर्भवति। इयं राजसी महालक्ष्मी एव समग्रस्य सृष्टेः कारणमिति परिगण्यते[115] ।

### 3.2.3.3. प्रसूतिकोशः

राजस्याः महालक्ष्म्याः, तामस्याः महामायायाः, सात्विक्याः

---

111 कोश. कुलायपर्याय शरीरापरनामवान् ॥ लक्ष्मी. ६ ५ cd

112. शक्तिर्माया प्रसूतिश्च प्रकृतिस्त्रिगुणात्मिका ॥
ब्रह्माण्डं जीवदेहाश्चेत्येते षट्कोशसञ्ज्ञिता । Ibid. ६.३ cd, ४ab

113 शक्ति. सा प्रथमः कोश शुद्धमार्गप्रवर्तनी। Ibid ६ ५ab

114 Ibid ६ - १७ .

115 अनिरुद्धस्य याहता रतिरित्येव संज्ञिता।
ैव देवा महालक्ष्मीर्मायाकोश स उच्यते॥ Ibid ६.२८

महाविद्यायाश्च समवायरूपः प्रसूतिकोश इति व्यपदिश्यते[116]। अत्र-

श्रीविरिञ्ची राजस्या महालक्ष्म्याः प्रद्युम्नस्य च मानसीसृष्टिरिति, त्रयीरुद्रौ तामस्या महामायाया संकर्षणस्य च मानसीसृष्टिरिति, गौरीविष्णू सात्विक्या महाविद्याया अनिरुद्धस्य च मानसीसृष्टिरिति च परिगण्यते[117]।

### 3.2.3.4. प्रकृतिकोशः

त्रयीधातृभ्यां सृष्टस्य गौरीरुद्राभ्या भेदितस्य श्रीविष्णुभ्यां परिपालितस्याण्डस्य मध्ये धात्रा यत् सृष्टं प्रधानं तत्सलिलीकृत्य विष्णुः श्रिया सह शेते[118]। श्रीविष्णो· शयनाधार· यत् प्रधानं तत् प्रकृतिकोश इत्यभिधीयते[119]। विरिञ्चिः यदण्डमजनयत् तत् प्रकृतिरिति केचन कथयन्ति[120]।

### 3.2.3.5. ब्रह्माण्डकोशः

महदाद्यैः पृथिव्यन्तै· यदण्डं निर्मितं तद्ब्रह्माण्डकोश इति कथ्यते[121]।

### 3.2.3.6. जीवदेहकोशः

ब्रह्माण्डे अङ्गप्रत्यङ्गयुक्तं यत् जीवानां शरीरं जायते तत् जीवकोश इत्युच्यते[122]।

---

116 महालक्ष्मीमहामायामहाविद्यामयो महान्।
प्रसूतिर्नाम कोशो मे तृतीय परिपठ्यते॥ Ibid ६ २०

117. Ibid ५ ७-१२

118. Ibid ५ १६-२१ab

119. प्रधानं सलिलीकृत्य तच्छेते पुरुषोत्तम.॥
सा प्रोक्ता प्रकृतिर्योनिर्गुणसाम्यस्वरूपिणी। Ibid ६.२१cd, २ab

120. विरिञ्चोऽजनयद्यद्वै पूर्वमण्ड स्वमात्मनि॥
तदेके प्रकृतिं प्राहुस्तत्त्वशास्त्रविशारदा। Ibid ६.२२cd, ३ab

121. महदाद्यै पृथिव्यन्तैरण्डं यन्निर्मित सह॥
तद्ब्रह्माण्डमिति प्रोक्त यत्र ब्रह्मा विराडभूत्। Ibid ६.२३cd, ४ab

122. अङ्गप्रत्यङ्गयुक्त यच्छरीर जीविनामिह॥
एषा कोशविधा षष्ठी क्रमशस्तनुता गता। Ibid ६.२४cd, ५ab

- इति पञ्चरात्रसंहिता· कथयन्ति।

एषां षण्णां कोशानाम् आद्ये शक्तिकोशे वासुदेव एव सकर्षणप्रद्युम्नानिरुद्धरूपेण अहंतया सह तिष्ठति। पञ्चस्वन्येषु कोशेषु परं नानाविधा जीवाः तिष्ठन्ति; शुभाशुभकर्मजनिता· विविधाः दशाः भजन्ते[123]।

अण्डमध्ये आविर्भूता भगवतः अवताराः स्वातन्त्र्यनिर्मिताः न तु कर्मवशानुगाः। भगवतः अवतारदेहाः अप्राकृताः[124]।

देवाद्या. स्थावरान्ता· नानास्थानजुष जीवाः स्वकर्मभि· संसरन्ति। ते कर्मक्षयानन्तरं ज्ञानभूयस्त्वं प्राप्य योगक्षपितकल्मषाः शनै· पूर्वोक्तान् कोशान् आरोहन्ति; न च पतन्ति। सत्यलोकप्रभृतिलोकान् आरूढा; ते परं न पुनर्निवर्तन्ते इति पाञ्चरात्रसंहितासूपवर्ण्यते[125]।

### 3.2.4.0. विष्णुशक्तेः द्विधा व्यवस्थितिः

सर्वभावानुगामिनी षाड्गुण्यपूर्णा ज्ञानानन्दक्रियारूपा परमात्मापृथग्भूता विष्णुशक्तिः क्रियाशक्ति - भूतिशक्तिभेदेन द्विधावतिष्ठते[126]।

123. आद्ये कोशे स्वय देवस्त्रिधैवाहतया स्थित ।
पञ्चस्वन्येषु केशेषु जीवा नानाविधाः स्थिता ॥
शुभाशुभविभागोत्था भयन्ते विविधा दशाम्। Ibid ६ २६, ७ab

124 अण्डमध्येऽवताराश्च तासा तेषां च ये स्मृता ।
स्वातन्त्र्यनिर्मितास्त्वेते नैव कर्मवशानुगा ।
अप्राकृताश्च ते देहा उभयेषा प्रकीर्तिता । Ibid ६.२८, ९ab

125. अन्ये पञ्चसु कोशेषु देवाद्या. स्थावरान्तिमा ॥
नानास्थानजुषो जीवा कर्मभि. ससरन्ति ये।
अधिकारक्षय नीत्वा शुभपाकवशादिमे॥
सप्राप्य ज्ञानभूयस्त्व योगक्षपितकल्मषा ।
आरोहन्ति शनै कोशानारूढा न पतन्ति ते॥
सत्यलोकात्प्रभृत्येते या भूमिमधिरोहिता. ।
पुनस्ते न निवर्तन्ते तिष्ठन्त्यूर्ध्व व्रजन्ति वा॥ Ibid ६.२९cd - ३२

126. लक्ष्मीमय. समुन्मेष स द्विधा व्यवतिष्ठते।
क्रियाभूतिविभेदेन . . ॥ अहि. ३.२७abc

### 3.2.4.1. क्रियाशक्तिः

सुदर्शनमयः संकल्प एव क्रियाशक्तिः । इयं क्रियाशक्तिः भावकशब्देनापि व्यवह्रियते[127]।

### 3.2.4.2. भूतिशक्तिः

भाव्यशब्देनाभिधीयमाना भूतिशक्तिः शुद्धा-शुद्धेतरा चेति विभागवती। व्यूह-विभवात्मिका शुद्धा। शक्त्यदिपृथिव्यन्ता शुद्धेतरा। इयं नानातत्त्वमयी भूतिः मरुता ज्वालेव सुदर्शनेन सृष्टौ आनुलोम्येन, प्रलये प्रातिलोम्येन च प्रेर्यते[128]।

### 3.3. जीवस्वरूपम्

जीवस्य स्वरूपं पञ्चरात्रसंहितासु विविधैः प्रकारैरुपवर्ण्यते। तथा हि -

चिद्रूपं गुणरागादिभिः युक्तं च चैतन्यं जीव इति जयाख्यसंहितायाम्[129], चैतन्यस्वरूपः स्वयंप्रकाशः शुद्धस्फटिकतुल्यो नित्यो जीव इति विष्णुतिलके[130],

---

127 भावकस्तत्र सकल्प सुदर्शनमयो हरे । Ibid ७ ६६

128 भाव्यो नाम पराशो य सा भूतिरिति गीयते।

.. ... .. .

सकर्षणादिव्यूहान्ता शुद्धसर्गमयी स्थिता।
शक्त्यादिभूमिपर्यन्ता शद्धेतरमयी मुने ॥

.. . . .

इतीय विविधा भूतिर्नानातत्त्वमयी मुने।
सुदर्शनेन मरुता ज्वालेव बहुधेर्यते ॥
आनुलोम्येन सर्गे तु प्रातिलोम्येन चाप्यये। Ibid ७ ६८ab, ९, ७१,२ab

129. यत्तत्स्थित च चिद्रूपं स्वसवेद्याद्यनिर्गतम् ॥
रञ्जित गुणरागेण स आत्मा कथितो द्विज। ज ४ ५७cd, ८ab

130 पुमानित्युच्यते जीव चित्स्वरूप स्वयप्रभ ।
शुद्धस्फटिकसंकाश नित्यो वलयमाश्रयेत् ॥
यथा ब्रह्म भवेन्नित्य तथा नित्यो भवेत्पुमान्। वि ति. १ १०६,७ab

अनादि अपरिच्छेद्य· ज्ञानानन्दस्वरूप· भगवन्मयो जीव इति अहिर्बुध्न्यसंहितायाम्[131] शुद्धा चिदानन्दरूपिणी चिच्छक्तिः अनाद्यविद्यया विद्धा सती जीव इत्याख्यायते इति[132], हरे· अहंतायाः प्रमातृ-अन्तःकरण - बहिष्करण - भावभूमिकाख्यया या· चतस्रः दशा भवन्ति तत्र लक्ष्म्याः संकोचरूप· प्रमाता जीव इति च लक्ष्मीतन्त्रे[133], पुण्यापुण्यफलभोक्ता जीव इति पाद्मसंहितायाम्[134], उपाधौ विष्णोः प्रतिबिम्बं जीव इति विष्णुसंहितायां[135] च जीवस्वरूपमुपमुवर्ण्यते।

पूर्वोक्तानां जीवस्वरूपाणां परिशीलनेन एतदवगम्यते यत् जयाख्ये लक्ष्मीतन्त्रे च यद्यपि जीवस्वरूपं समानतया वर्ण्यते तथापि जयाख्यापेक्षया लक्ष्मीतन्त्रे अहंताया· प्रमात्रादि दशाचतुष्टयवर्णनपूर्वकं प्रमातृदशा जीव इति अधिकतया प्रतिपाद्यते। एवमेव विष्णुतिलके अहिर्बुध्न्ये च जीवस्वरूपकथने भागशः साम्यं दृश्यते तथापि क्वचिद्भेदो वर्तते। तथाहि-जीवः ज्ञानानन्दस्वरूपः चैतन्यस्वरूप· स्वयंप्रकाश इत्यत्र साम्यं दृश्यते। अहिर्बुध्न्ये तु कालशक्तिवशात् जीवः संसरति इति विशेषः प्रदर्शितः। विष्णुतिलके जीवस्य नित्यत्वं विशेषः। विष्णुसंहितायां प्रतिबिम्बरूपेण, पाद्मसंहितायां कर्मफलभोक्तृत्वेन रूपेण जीवः

---

131. अनादिरपरिच्छेद्यश्चिदानन्दमय पुमान्।
भगवन्मय एवाय भगवद्भावित सदा॥ अहि १४. ६

132 चिच्छक्तिर्जीव इत्येवं विबुधै परिकीर्त्यते। लक्ष्मी,१२.१८ab
अनौपाधिकमच्छेद्यं जीवरूप तु चिन्मयम्।
एवंरूपमपि त्वेतच्छाद्यतेऽनाद्यविद्यया॥ Ibid १३ ३८

133. प्रमातेति विधा त्वेका तदन्त करणं परा।
बहि करणमन्या च चतुर्थी भावभूमिका॥
प्रमाता चेतन प्रोक्तो मत्सकोच स उच्यते। Ibid ६ ३५,६ab

134 पुण्यपापनिमित्ते य सुखदु खे निषेवते।
सासारी . .. ॥ पाद्म (ज्ञा) ४ १०abc

135 यथाम्भसीन्दुबिम्बानि प्रतिशब्दाश्च नैकधा॥
एकोऽप्यात्मा बहुष्वेवमित्याहुस्तत्त्वदर्शिन । वि ३ ३४cd, ५ab

भिन्नतया उपवर्ण्यते।

इत्थं पञ्चरात्रसंहितानां जीवस्वरूपनिरूपणपरेषु अंशेषु परिशीलितेषु सत्सु स्वयंप्रकाशस्य जैतन्यस्य अनाद्यविद्यासंबन्धेन कर्मफलभोक्तृत्वे जीवत्वमित्यवगन्तुं शक्यते। अयमभिप्रायः वेदान्तिनां जीवस्वरूपाभिप्रायेण साम्यं वहति।

अविद्यासंबन्धात् आत्मनः नानात्वं भवति इति जयाख्यसंहितायाम्[136] उच्यते। मुखस्य नानात्वमिव, एकस्यैव मुखस्य दर्पणभेदेन उपाधिवशाद्यथा नानात्वं दृश्यते तथा उपाधिभेदात् एकस्यैव विष्णोः नानात्वं मन्दबुद्धिभिरुच्यते । परमार्थतस्तु आत्मा एक एव इति विष्णुसंहितायामुच्यते[137]। विष्णुसंहितोक्तजीवात्मस्वरूपदर्शनेन अद्वैतसिद्धान्तः अत्र प्रतिफलतीति वक्तुं शक्यते। अद्वैतिनो हि एकमेव चैतन्यं मायायामन्तःकरणेषु वा प्रतिबिम्बितं सत् जीवव्यपदेशं लब्ध्वा संसरति नानात्वं च भजत इति निरूपयन्ति। अत्र संहितायामपि परमात्मनः स्वाभाविकं बहुत्वं निराकृत्य औपाधिकस्य बहुत्वस्य कथनात् आत्मैक्यवादः संमत इति प्रतीयते।

विष्णुतिलके जीवः ब्रह्मतुल्यः इति कथनात् परमात्माभेदः जीवात्मनः न स्पष्टमुक्तः[138]।

विष्णोः महासत्तानाम्नी शक्तिर्वर्तते। तस्याः कोट्यर्बुदांशभूते भूतिः क्रिया

136. ज्ञान त्वनेकभेदैर्यत्तत्त्वतामेति चात्मन ॥
गौणे विद्यामये तत्त्वे सम्यग्विद्यामयस्य च। ज. ४. ५३cd, ४ab

137. दर्पणानां बहुत्वे तु दृश्यते नैकता यथा॥
तद्वद्बहुत्व मन्यन्ते विष्णोस्तस्याल्पचेतस ।
. . .. ..
प्रकृतेर्गुणसयोगभेदैरेकोऽप्यनेकधा।
निर्गुणोऽपि पुमान् भाति स्फटिकोऽन्यैरिवान्वित ॥
वि ३.३३cd,४ab;४ ११

138. यथा ब्रह्म भवेन्नित्य तथा नित्यो भवेत्पुमान्। वि ति १ १०७ab

चेति द्वे शक्ती भवत । तत्र भूतिशक्ति. शुद्धा अशुद्धा चेति द्विविधा। शुद्धा शक्तिः पुंशक्ति कालशक्तिश्चेति द्विविधा। तत्र पुशक्तिरेव जीवात्मेति कथ्यते। अयं च जीवात्मा कालशक्तिवशंवद. सन् संसरति। परमार्थतः अनणुः ईश्वर. सर्वज्ञश्चायं जीवः अविद्यया स्वस्वरूपस्य तिरोधानात् अणुः अनीश्वरः(अकिंचित्करः) असर्वज्ञश्च भवति इति अहिर्बुध्न्यसंहितायां जीवात्मनः स्वरूपमुपवर्ण्यते[139]।

अत्र परमात्मनः अनेकविधाः शक्तीर्निर्दिश्य तासु पुंशक्तिः जीवात्मा इति नूतन. सिद्धान्तः आविष्कृतः। एवंरीत्या शक्तिस्वरूपत्वं जीवस्य अद्वैते विशिष्टाद्वैते वा न प्रतिपाद्यते। परं तु जीवात्मा अणुरिति विशिष्टाद्वैतिनः। अनणुरिति अद्वैतिनः। अस्यां संहितायाम् अणुत्वं निराकृत्य अनणुत्वं कथ्यते। तदंशे अद्वैतसिद्धान्तसाम्यं वक्तुं शक्यते। तथा अनीश्वरः जीवः इति विशिष्टाद्वैतिन·। मोक्षदशायामपि ईश्वरत्वं जीवस्य नास्तीति ते निरूपयन्ति।

अस्यां च संहितायां स्वाभाविकेश्वरत्वाभ्युपगमात् तदंशेऽपि अद्वैतसाम्यमवगम्यते। सर्वज्ञत्वं तु मुक्तिदशायां जीवस्य आविर्भवतीति विशिष्टाद्वैतिनोऽपि वदन्ति। परं तु शक्त्यात्मवादः अत्र नूतन·।

---

139. या सा शक्तिर्महासत्ता विष्णोस्तद्धर्मधर्मिणी।
तस्या कोट्यर्बुदाशेन शक्ती द्वे कथिते तव॥
भूतिश्चेति क्रिया चेति भाव्यभावकसज्ञिते।
भूति सा क्रियया ज्वाला मरुतेव प्रणर्त्यते॥
नानाभेदवती भूतेर्विभूति. कथिता पुरा।
पुशक्ति कालमय्यन्या पुमान् सोऽयमुदीरित॥
कालशक्तिविकारस्थ सोऽयं ससरति ध्रुवम्॥
... . ... ...
. .. ..
. . .. ... .
आकारस्य तिरोधानादणुत्व पुस इष्यते।
ऐश्वर्यस्य तिरोभावादकिचित्करता स्मृता॥
पुसो विज्ञानसकोचादज्ञत्व समुदाहृतम्। अहि. १४ ७-१०, १८,९ab

अहिर्बुध्न्यसंहितायां परमात्मशक्तिलेशरूपत्वं जीवात्मन उपवर्णितम् । लक्ष्मीतन्त्रे तु लक्ष्मीशक्तिलेशत्वं प्रतिपादितमिति भेदः । अन्यत्सर्वमुभयत्र समानम् ।

पाद्मसंहितायां जीवात्मा शुभाशुभात्मकं कर्म कृत्वा तदनुगुणतया मायासंबन्धेन अनेकविधानि शरीराणि प्राप्य मायागतै सत्त्वरजस्तमोगुणैः प्रेरित· गुणत्रयानुगुणानि सुखदुःखानि भजमानः ससारी भवति इति जीवात्मनः स्वरूपमुपवर्णितम्[140] । प्रकृतिगतैः सत्त्वादिगुणै· शुभाशुभानि कर्माणि करोतीत्ययं सिद्धान्तः सांख्यदर्शनमनुसरति ।

### 3.4. प्रलयः

संसारे नानास्थानेषु शरीरादिपरिग्रहेण मुहुर्मुहुर्भ्राम्यमाणानां गर्भावासादिविविधदु·खेन खिन्नानां प्राणिनां किंचित्कालं विश्रमार्थं दुःखोपशमार्थं च सर्वेश्वरस्य संजिहीर्षा संपद्यते । तदनुरोधेन पृथिव्यादीनां तत्त्वानामुत्तरस्मिन्नुत्तरस्मिन् सति पूर्वपूर्वस्य विनाशो जायते । सोऽयं विनाश एव प्रलयत्वेन परिगण्यते । स च प्रलयः पञ्चरात्रसंहितासु इत्थमुपवर्ण्यते-

चराचरमेतज्जगत् महावातेन संशुष्कं महाग्निना संदग्धं च सत् नीरसं शुष्कमभूत् । आशैलात्आतृणात् सर्वं पृथिव्यां लयमेति । पृथिवी अप्सु, आपः तेजसि, तेजः वायौ, वायु· आकाशे, आकाशः अहंकारे, अहंकारः बुद्धौ, बुद्धिः तमसि प्रलीयते । पञ्च कर्मेन्द्रियाणि, पञ्च ज्ञानेन्द्रियाणि, मनः अहंकारश्च भूतेषु लीयमानेषु सत्सु तैः सह स्वकारणेषु लीयन्ते । तदानीं मुख्यं जगत् तम एवावतिष्ठते। तमः रजसि, रजः सत्त्वगुणे, सत्त्वं काले, काल· नियतौ, नियतिः शक्तौ, शक्तिः पुरुषे, पुरुषः अनिरुद्धे, अनिरुद्ध· प्रद्युम्ने, प्रद्युम्नः संकर्षणे, संकर्षणः वासुदेवे च प्रलीयन्ते[141] ।

140. पाद्म (ज्ञा) ४ १०,१९,२०

141. अहि ४.११-६८ab

पृथिव्यादि संकर्षणान्तानि तत्त्वानि वासुदेवे अपृथग्भूततया स्थितायाः भगवच्छक्ते· कोट्यंशत्वेन परिगण्यन्ते। यस्यां शक्तौ विश्वं सदसच्चिदचिद्रूपै· प्रकाशते तस्यामुपरतायां विश्वकोलाहल· शाम्यति। सा शक्तिः कार्यत· अलक्ष्या, वासुदेवात् भेदं विजहती सौदर्शनीं प्रतिसंचारिकां प्रलयहेतुं क्रियाशक्तिं संहृत्य संकल्परूपिणीं स्थितिं बिभ्रती इन्धनाभावात् अग्निरूपं गता ज्वालेव ब्रह्मभावं प्राप्नोति[142]।

प्रलयावस्थायां सद्वा असद्वा न भासते। अनिर्देश्यपरब्रह्मरूपो वासुदेवः एक एव भावाभावौ स्वान्तर्लीनौ कृत्वावतिष्ठते[143]। ज्ञानादिषाड्गुण्यस्य युगलत्रयात्मकस्य वासुदेवे विलय· रात्रिरित्युच्यते[144]। तदा परब्रह्मत्वेन प्रथितः वासुदेवश्चाव्यक्तत्वेन परिगण्यते[145]।

---

142 या सा भगवत शक्तिरहता सर्वभावगा॥
अपृथक्चारिणी सत्ता महानन्दमयी परा।
संकर्षणादिभूम्यन्तस्तस्या कोट्यश ईरित॥
सदसच्चिदचिद्रूपैर्यत्र विश्व प्रकाशते।
तस्मिन्नुपरते शश्वद्विश्वकोलाहलोद्गमे॥
अलक्ष्या कार्यत शक्तिर्देवाद्विजहती भिदाम्।
प्रतिसचारिका शक्ति क्रियां सौदर्शनीं स्वकाम्॥
संहृत्य बिभ्रती ता तु स्थिति सकल्परूपिणीम्।
इन्धनाभावतो ज्वाला वह्निभाव यथा गता॥
ब्रह्मभाव व्रजत्येव सा शक्तिर्वैष्णवी परा। अहि. ४ ७२cd-७ab

143. नासदासीत्तदानी हि नो सदासीत्तदा मुने॥
भावाभावौ विलोप्यान्तर्विचित्रविभवोदयौ।
अनिर्देश्य परं ब्रह्म वासुदेवोऽवतिष्ठते॥ Ibid ४.६८cd, ९

144. षण्णा युगानि विज्ञानबलादीनामशेषत॥
त्रीणि यस्मिन् प्रलीयन्ते यत्तत्सा रात्रिरुच्यते। Ibid ४.७०cd, १ab

145. . तत्पर ब्रह्म तदव्यक्तमुदाहृतम्।
. .
सकर्षणादिभूम्यन्तमञ्जनं विगत यत॥
तदव्यक्तमिति ज्ञेयम् । Ibid ४ ७०ab,७१cd, ७२ab

सृष्टेः यावान् कालः प्रलयस्यापि तावान् कालः ।

इत्थं चराचरात्मकस्य जगतः लयप्रकारः पञ्चरात्रसंहितासु वर्ण्यते ।

## 3.5.0. सृष्टिः

अव्यक्तात्परब्रह्मणः बीजात् अङ्कुरादीनामिव जगतो विकासः सृष्टिरित्यभिधीयते । अवाप्तसमस्तकामस्य परमात्मनः लीलैव[146] तस्य सृष्टिव्यापारे निदानमिति पञ्चरात्रसंहिताः निर्दिशन्ति । इयं च सृष्टिः शुद्धा - शुद्धेतरा चेति द्विधा परिगण्यते ।

## 3.5.1.0. शुद्धसृष्टिः

शुद्धसत्त्वगुणद्रव्यनिर्मिता सृष्टिः शुद्धेति पञ्चरात्रसिद्धान्तः । तथा च व्यूह - व्यूहान्तर - विभव - विभवान्तर - अर्चानाम् अप्राकृतलोके विराजमानानां प्राकृतलोके कृतावताराणां च शुद्धसत्त्वमयत्वात् शुद्धसृष्टावन्तर्भावः परिगण्यते।

प्रलयकाले कार्येषु सर्वेषु प्रलीनेषु परब्रह्मपदवाच्यो नारायणः निर्व्यापारपरिपूर्णषाड्गुण्यः निर्वाण्व्याकाशोपमः संपद्यते । ततः परमात्मनः सिसृक्षया व्योम्नि विद्युदिव विष्णुशक्तिरूपा देवी लक्ष्मीः क्वचिदुद्योतते[147] । भगवता सृष्टिकार्योन्मुखतामापाद्यमानया तया शुद्धसृष्टिः प्रवर्तते ।

---

146 विना प्रयोजनोद्देश्यं स्वयं सुखरूपानुभव एव लीलापदस्यार्थः । अवाप्तपदस्य सकला अपि कामाः निष्प्रतिबन्धं प्राप्यन्त इति लीलाशब्दस्यार्थकरणात् अवाप्तसमस्तकामस्य लीलाया कथं प्रवृत्तिरिति पर्यनुयोगस्य नास्त्यवकाशः ।

147 प्रसुप्ताखिलकार्यं यत्सर्वतः समतां गतम् ।
नारायणः परं ब्रह्म सर्वावासमनाहतम् ॥
पूर्णस्तिमितषाड्गुण्यमसीनीराम्बरोपमम् ।
तस्य स्तैमित्यरूपा या शक्तिः शून्यत्वरूपिणी ॥
स्वातन्त्र्यादेव कस्माच्चित्क्वचित्सोन्मेषमृच्छति ।
. . ॥
देवी विद्युदिव व्योम्नि क्वचिदुद्योतते तु सा ॥ अहि ५.२-४ab, ५ab

### 3.5.1.1. व्यूहसृष्टिः

सृष्ट्यादिक्रियानिर्वर्तनाय परवासुदेवस्य चतुर्धा रूपस्वीकरणं व्यूहावतार इति पञ्चरात्रसंहिताः प्रतिपादयन्ति। तथा हि-

शक्तिमान् पुरुषोत्तमः भगवान् परवासुदेवः पूर्णस्तिमितषाड्गुण्यः निस्तरङ्गार्णवसदृश स्वप्रचोदितात् युगपत् षड्गुणोन्मेषात् व्यूहवासुदेवो भवति[148]।

व्यूहवासुदेवोऽयं हिमकुन्देन्दुकान्तिमान्, पीतकौशेयवसनः, सुपर्णध्वजशोभितः, सौम्यवक्त्रः, पुण्डरीकनिभेक्षणः, चतुर्भुजः, शङ्खचक्रगदाधारी इति व्यूहवासुदेवस्वरूपं पञ्चरात्रसंहितासु वर्ण्यते[149]।

व्यूहवासुदेवस्यावतरणं पञ्चरात्रसंहितासु विभिन्नै. प्रकारैरुपवर्ण्यते। तथा हि -

परवासुदेवात् अपरवासुदेव उत्पद्यते। सः एकवक्त्र·, चतुर्बाहुः, चक्राद्यायुधः, सृष्ट्यादिकार्यानुष्ठानाय पद्मचक्रगदा· मुक्त्यर्थं पाञ्चजन्यं च धरति। परवासुदेवसदृशोऽयं श्रीवत्सकौस्तुभधारी वनमालाभूषितः पीताम्बरधारी

---

148 अनन्तो भगवान् विष्णु शक्तिमान् पुरुषोत्तम·॥
पूर्णस्तिमितषाड्गुण्यो निस्तरङ्गार्णवोपम ।
षण्णा युगपदुन्मेषाद्गुणाना स्वप्रचोदितात्॥
अनन्त एव भगवान् वासुदेव सनातन । Ibid ५ ३२cd, ४ab

149 तत्राद्यं भगवद्रूप हिमकुन्देन्दुकान्तिमत्॥
चतुर्भुज सौम्यवक्त्र पुण्डरीकनिभेक्षणम्॥
पीतकौशेयवसन सुपर्णध्वजभूषितम्॥
मुख्यदक्षिणहस्तेन भीतानामभयप्रदम्॥
तथाविधेन वामेन दधान शङ्खमुत्तमम्॥
अपरेण दधान च दक्षिणेन सुदर्शनम्॥
वामेन च गदा गुर्वीं निषण्णा वसुधातले॥ लक्ष्मी १०.२७cd-३०;
सा ५ ९-१२ab,न.१.३४

तथा मयूरकण्ठवत् श्यामवर्णश्चेत्यङ्गीक्रियते। अपरवासुदेवोऽयमात्मान वासुदेवनारायणभेदेन द्विधा अकरोत्। तत्र वासुदेव शुद्धस्फटिकसमप्रभ, नारायणस्तु नीलाम्बुदसमप्रभ। अनयोराद्य एव व्यूहवासुदेव इति व्यवह्रियते। इत्येकत्र[150],

व्यूहसृष्टिकामेन भगवता आत्मा द्विधा कृत. । तत्र आद्यो विमलस्फटिकच्छवि· परवासुदेव. द्वितीयो नीलनीरद्युतिः व्यूहवासुदेवः अथवा नारायणश्च समभूदित्यन्यत्र[151] चोपवर्ण्यते।

व्यूहवासुदेवस्य महिषी लक्ष्मी·[152]।

व्यूहवासुदेवः परवासुदेव इव षाड्गुण्यपरिपूर्णः सर्वज्ञः सर्वशक्तश्च। परवासुदेवे षाड्गुण्यं नित्योदितावस्थम्, व्यूहवासुदेवे तु शान्तोदितावस्थमित्येव पर-व्यूहवासुदेवयोर्भेदः[153]। अतो व्यूहवासुदेवस्य परवासुदेवान्नातीव भेदो दृश्यत

---

150 वासुदेवात्ततो जातो वासुदेवाह्वयोऽपर ।
एकवक्त्रश्चतुर्बाहुश्चक्राद्यायुधलक्षण ॥
स्थित्यै चक्र सरसिज दधान सृष्टये पुन ।
मुक्तये पाञ्चजन्य च गदा सहृतये तथा ॥
श्रीवत्सकौस्तुभोरस्को वनमालाविभूषित ।
मयूरकण्ठवच्छ्याम पीतनैसर्गिकाम्बर· ॥
स वासुदेवो भगवान् सृष्टिस्थित्यन्तमुक्तिद ।
आत्मान स द्विधा चक्रे पुन केनापि हेतुना ॥
तयोरेको वासुदेव शुद्धस्फटिकसनिभ ।
नारायणो द्वितीयस्तु नीलाम्बुदसमप्रभ ॥ पाद्म(ज्ञा) २ १३-७

151 स्वातन्त्र्येण स्वकीयेन द्विधात्मान चकार स ॥
तयोर्भगवतोरेको विमलस्फटिकच्छवि ।
अन्य कालाम्बुदाभासो नारायण इतीरित ॥ विश्वा. ४ १३cd, ४

152. लक्ष्मी कीर्तिर्जया माया व्यूहशक्तय ईरिता । लक्ष्मी. २० ३४cd

153 तत्र सततोदितया नित्योदितापरनामधेयया दशया युक्त परवासुदेव इति, शान्तोदितया च दशया युक्तो व्यूहवासुदेव इत्युच्यते।
त्र सा. उपो पृ २१

इति तस्य व्यूहेषु परिगणनमुपेक्ष्य त्रयो व्यूहा इत्यपि क्वचिद्व्यवहारः[154]।

स्वसंकल्पप्रेरितात् ज्ञानबलयोरुन्मेषात् सर्वशक्तिमयो भगवान् संकर्षणात्मना आविर्भवति[155]। वासुदेवेन आत्ममूर्तिं संक्षिप्य स्वकीयाद्देहादाकृष्य सृष्टोऽयं संकृष्टशरीरत्वात् संकर्षण इति व्यपदिश्यते[156]। यथा उदयगिरिस्थे सूर्ये प्रभा विजृम्भते तथा उदयस्थे वासुदेवे संकर्षणात्मिका प्रभा प्रादुर्भवति। सा च संकर्षणात्मिका शक्तिः षोडशशतवर्षाणि अव्यापृता तिष्ठतीति पञ्चरात्रसंहिता कथयन्ति[157]।

अयं च संकर्षणः सिन्दूरशिखराकारः, सौम्यवक्त्रः, चतुर्भुजः, अतसीपुष्पसंकाशवसनः,ताललाञ्छितः, सीर - मुसल - शङ्खधारी, अभयहस्तः, चतुष्कलः, भूष्णुः, मूलतनुः, श्रीमानिति संकर्षणस्वरूपं पञ्चरात्रसंहितासु वर्ण्यते[158]।

---

154 कृष्ण. लक्ष्मी उपो. पृ २२

155 तत्र ज्ञानबलद्वन्द्वाद्रूप साकर्षण हरे । अहि ५ १७ab

156.
सक्षिप्यात्मतनु पुन ॥
आकृष्य तु स्वकाद्देहात् सकर्षणमजीजनत् ॥
स सकृष्टशरीरत्वात् सकर्षण इति स्मृत । नार १ ३५bcd, ६ab

157. भानावुदयशैलस्थे प्रभा यद्वद्विजृम्भते ॥
उदयस्थे तथा देवे प्रभा सकर्षणात्मिका।
अव्यापृता शतान्येषा शक्तिस्तिष्ठति षोडश॥ अहि. ५.३०cd,१

158. सिन्दूरशिखराकार सौम्यवक्त्रं चतुर्भुजम् ॥
अतसीपुष्पसकाशवसनं ताललाञ्छितम्।
मुख्येन पाणियुग्मेन तुल्यमाद्यस्य वै विभो ॥
सीर तच्चक्रहस्तेऽस्य मुसल तु गदा करे लक्ष्मी १० ३१ cd, ३ab,
सा ५ १२cd, ४ab
पुरुषो रक्तवर्णश्च सकर्षाख्यश्चतुष्कल ॥
स च सकर्षण श्रीमान् भूष्णुर्मूलतनु स्मृत । नार १.३६cd,७ab

संकर्षण तिलकालकवत् स्वत· सर्व विश्व बिभर्ति । इदमेव भरणमित्युच्यते।

जीवाभिमानिनो[159] संकर्षणस्य महिषी कीर्तिः[160]। तथा च-

षड्गुणसंपन्नोऽपि संकर्षण· शास्त्रप्रदान - जगत्संहाररूपस्वकार्यद्वय-निर्वहणानुकूलयोः ज्ञानबलयो· गुणयोरुन्मेषं प्राप्य जीवतत्त्वमधिष्ठाय ज्ञानगुणेन शास्त्रप्रदानं बलगुणेन जगत्संहारं च निर्वहति।

ऐश्वर्यवीर्ययोरुन्मेषात् भगवान् प्रद्युम्नात्मना आविर्भवति[161]। स च प्रद्युम्नो देवः भगवत्प्राप्तिमार्गभूतेन शास्त्रार्थभावेन स्थितो भवति[162]। षोडशशतवर्षाणि प्रद्युम्नस्य शक्ति· अव्यापृता तिष्ठति[163]।

प्रद्युम्नः प्रावृण्निशासमुदितखद्योतनिचयप्रभः रक्तकौशेयवसन·, मकरध्वजशोभितः, सौम्यवक्त्रः, चतुर्बाहु·, शार्ङ्ग-बाणपञ्चक-शङ्खधर·, अभयहस्तश्चेति पञ्चरात्रसंहिता· प्रद्युम्नमुपवर्णयन्ति[164]।

---

159. सकर्षणादयो देवास्त्रय एते पुरातना ॥
जीवो बुद्धिरहकार इति नाम्ना प्रकीर्तिता । लक्ष्मी ६ १.२cd.३ab

160 Ibid २०.३४cd

161 ऐश्वर्यवीर्यसभेदाद्रूपं प्राद्युम्नमुच्यते ॥ अहि. ५ १.७cd

162 वीर्यैश्वर्यमयो देव प्रद्युम्न पुरुषोत्तम ।
स्थित शास्त्रार्थभावेन भगवत्प्राप्तिवर्त्मना ॥ Ibid ५ २२cd.३ab

163 Ibid ३५cd-७ab

164 प्रावण्निशासमुदिखद्योतनिचयप्रभम्।
रक्तकौशेयवसन मकरध्वजशोभितम्॥
सौम्यवक्र चतुर्बाहु तृतीय परमेश्वरम्।
मुख्यहस्तद्वयं चास्य प्राग्वत्तुल्य महामते ॥
वामेऽपरस्मिन् शार्ङ्ग च दक्षिणे बाणपञ्चकम्।
लक्ष्मी १० ३६-
६ab,
मा ५ १.४cd-६

मनोऽभिमानिन·[165] प्रद्युम्नस्य महिषी जया[166]।

षड्गुणसंपन्नोऽपि प्रद्युम्न· धर्मोपदेश - शुद्धवर्गसृष्टिरूपयोः स्वकार्यनिर्वहणानुकूलयोः ऐश्वर्यवीर्यगुणयोः समुन्मेषं प्राप्य ज्ञानप्रसरणद्वारभूतं मनस्तत्त्वं समाक्रम्य शास्त्रानुष्ठानरूपं धर्मोपदेशं वीर्यगुणेन, शुद्धवर्गसृष्टिम् ऐश्वर्यगुणेन च निर्वर्तयति।

शक्तितेजोद्वन्द्वात् भगवान् अनिरुद्धात्मना आविर्भवति[167] । षोडशशतवर्षाणि अनिरुद्धस्य शक्तिः अंशांशेन उदिता अव्यापृता तिष्ठति[168] ।

अनिरुद्धो देव· अञ्जनाद्रिप्रतीकाश पीताम्बरवेष्टित., विशालाक्षः, मृगलाञ्छनभूषितः, चतुर्भुज., शङ्ख-खड्ग-खेटकधारी, अभयहस्तः[169], क्षीरोदशायी, नागपर्यङ्कग , महेन्द्रनीलद्युतिः, द्विपञ्चरविभास्वरः[170]।

अनिरुद्धो देव· साधकान् भगवत्प्राप्तिरूपं शास्त्रार्थफलं प्रापयति[171] ।

---

165 Ibid ६ १२cd, ३

166. Ibid २०.३४ cd

167 शक्तितेज समुत्कर्षादानिरुद्धी तनुर्हरे । — अहि ५ १८ ab

168 Ibid ५ ३८ cd, ९

169 अञ्जनाद्रिप्रतीकाश सुपीताम्बरवेष्टितम्।
चतुर्भुज विशालाक्ष मृगलाञ्छनभूषितम्॥
आदिवत् पाणियुगलमाद्यमस्य विचिन्तयेत्।
दक्षिणादिक्रमेणाथ द्वाभ्या वै खड्गखेटकौ॥
— लक्ष्मी १० ३७,८; सा ५.१७,८

170 अनिरुद्धश्चतुर्बाहु सर्वलोकेश्वर प्रभु ।
. . . ॥
क्षीरोदशायी भगवान् नागपर्यङ्कग प्रभु ।
महन्द्रनीलसकाशो द्विपञ्चरविभास्वर ॥ — नार १.४१ab, २

171 शास्त्रार्थस्य फल यत्तद्भगवत्प्राप्तिलक्षणम्॥
प्रापयत्यनिरुद्ध सन् साधकान् पुरुषोत्तम । — अहि ५ २३cd, ४ab

अहंकाराभिमानिनो[172] अनिरुद्धस्य महिषी माया[173]।

सर्वेऽपि षड्गुणा. यद्यप्यनिरुद्धे सन्ति तथापि जगद्भरणतत्त्वबोधनरूपयोः स्वकार्यनिर्वहणानुकूलयो शक्तितेजसोः उन्मेषं प्राप्य अहंकारतत्त्वमधिष्ठाय शक्तिगुणेन जगद्भरणं तेजोगुणेन तत्त्वज्ञानप्रदानं कालसृष्टिं मिश्रवर्गसृष्टिं च करोति।

व्यूहवासुदेवात् ज्ञानगुणाधिक· संकर्षण·, संकर्षणात् बलगुणाधिक प्रद्युम्नः, प्रद्युम्नात् ऐश्वर्यगुणाधिको अनिरुद्धः इत्येते संभवन्ति। सर्वेऽप्येते एकवक्त्राः, चतुर्भुजाः, शङ्खचक्रगदाब्जधारिणः इति क्वचित्[174] संकर्षणादीनामुत्पत्तिः उपवर्ण्यते।

वनमालाधराः सर्वे श्रीवत्सकृतलक्षणाः।

शोभिताः कौस्तुभेनैव रत्नराजेन वक्षसि॥

किरीटमुकुटै रम्यैर्हारकेयूरनूपुरैः।

ललाटतिलकैश्चित्रैः स्फुरन्मकरकुण्डलै.॥

स्रग्वरैर्विविधैर्माल्यै· कर्पूराद्यैर्विलेपनै·।

---

172. लक्ष्मी. ६ १२cd,३

173. Ibid २०.३४cd

174. संकर्षणो वासुदेवात् तस्मात्प्रद्युम्नसंज्ञित ।
प्रद्युम्नादनिरुद्धोऽभूत् सर्व एते चतुर्भुजा ॥
ज्ञानादिगुणसामान्ये वासुदेव प्रकीर्तित ।
षण्णा गुणानां वैषम्ये वक्ष्यन्ते मूर्तय क्रमात्॥
ज्ञानाधिको भवेद्ब्रह्मन् सकर्षणसमाह्वय ।
बलेऽधिकस्तु प्रद्युम्न स्यादैश्वर्येऽनिरुद्धक ॥ पाद्म (ज्ञा) २.१८-२०
इमे सर्वे स्वै स्वै षड्भिर्गुणैर्युता ।
चतुर्भुजा· सर्व एते [1] प्रागुक्तायुधधारिण ॥

---

[1] शङ्खचक्रगदाब्जधारिण विश्वा ४ १८

रम्यैरलंकृताश्चैव[175]

इति वासुदेव - संकर्षण - प्रद्युम्न - अनिरुद्धानां सामान्यं लक्षणं पाञ्चरात्रसंहितासु कथ्यते।

संकर्षण - प्रद्युम्न - अनिरुद्धानां त्रयाणां दिव्यो देह· षाड्गुण्यमय[176] एव। वस्तुत· एतेषा भेदो नास्ति। तत्तत्कार्यसिध्यर्थ भेद· कल्पितः। एतेषां त्रयाणां शरीरतदवयवादिकं सर्व अप्राकृतम् इति पञ्चरात्रसहिताः कथयन्ति[177]।

शास्त्रशास्त्रार्थतत्साध्यफलनिर्वाहका इमे संकर्षणादयः त्रयो व्यूहाः हरेः शक्तिमया भवन्ति[178]। सृष्टिस्थित्यन्तकर्तार इमे त्रयः विज्ञानैश्वर्यशक्तिरूपाः पुष्करेक्षणा· पुरुषा· अखिलात्मन· विष्णोः स्वरूपभूता भवन्ति[179]।

वासुदेवेन सह संकर्षण - प्रद्युम्न - अनिरुद्धाश्च त्रयो व्यूहाः

---

175 सा ५ १९ - २१abc

176 ज्ञानादयो षड्गुणा परवासुदेवे व्यूहवासुदेवे च परिपूर्णा वर्तन्ते। सकर्षण - प्रद्युम्न - अनिरुद्धेषु षड्गुणानामनुवृत्ति यद्यप्यस्ति तथापि तत्तत्कार्यनिर्वहणानुकूलयोर्द्वयोर्गुणयोरेव प्राकट्यम्, अन्येषा गुणानाम् अस्पष्टता।

177. .. एते हि षड्गुणा।
अन्यूनानधिका सर्वे वासुदेवात्सनातनात्॥
अङ्गप्रत्यङ्गबुद्ध्यादिर्नैषा भूतमय स्मृत।
षाड्गुण्यमय एवैषा दिव्यो देह सनातन॥
नैवैषा वास्तवो भेदश्चिन्तनीयो दिवस्पते।
तत्तत्कार्यप्रसिद्ध्यर्थ कृतोऽसौ कल्पनावशात्॥ लक्ष्मी ४. २१ bcd-३

178 शास्त्रशास्त्रार्थतत्साध्यफलनिर्वाहका इमे॥
पुरुषा पुण्डरीकाक्षा व्यूहा शक्तिमया हरे। अहि ५ २४cd,५ab

179 सृष्टिस्थित्यन्तकर्तारो विज्ञानैश्वर्यशक्तय।
मम रूपममी देवा पुरुषा पुष्करेक्षणा॥ लक्ष्मी ४ ११

चातुरात्म्यपदेनाभिधीयन्ते[180]।

एतच्चातुरात्म्यम् अनन्तमक्षरं च । वासुदेवादयश्चत्वारो व्यूहा. विशालाक्षाः निर्दोषाः निरनिष्टा· निरवद्या· सनातनाश्च भवन्ति। निर्व्यापारदशाया ते चत्वारः निरासक्ता· चिद्रूपा भवन्ति । गुणोन्मेषदशायां शक्त्यात्मकास्ते व्यवतिष्ठन्ते। स्थूलदशायां जगतामुपकाराय व्यक्तिमुपगच्छन्ति[181]।

एषा चातुरात्म्यव्यवस्थिति मन आलम्बनार्था[182]।

क्वचित्पुनः वासुदेवात् अच्युत , तस्मात्सत्यः, तस्मात्पुरुषः क्रमेणावतीर्णाः, ते अच्युतादयस्त्रयः वासुदेवादभिन्नाः इति अच्युतादीनामवतरणं वर्ण्यते[183]। परमेते अच्युत - सत्य - पुरुषा., संकर्षण - प्रद्युम्न - अनिरुद्धा

180. भगवान् वासुदेवश्च व्यूहाश्चैते त्रयो मुने ॥
चातुरात्म्यमिद विद्धि व्यक्ताव्यक्तस्वलक्षणम्।
अहि.५ २५cd,६

181 व्यूहा एते विशालाक्षाश्चत्वार पुरुषोत्तमा ।
निर्दोषा निरनिष्टाश्च निरवद्या सनातना ॥
अनन्तमक्षर चैतच्चातुरात्म्य महामुने।
निस्तरङ्गदशायां ते नि सक्त सक्तचिन्मया ।
शक्त्यात्मका गुणोन्मेषदशाया ते व्यवस्थिता.।
तत्र स्थूलदशाया ते व्यक्तिभावमुपागता ॥
जगतामुपकाराय सच्चिदानन्दलक्षणा । Ibid ५.४१-४ab

182. मन आलम्बनायैषा चातुरात्म्यव्यवस्थितिः॥ Ibid ५ ४४cd

183. यत्सर्वव्यापक देवं परम ब्रह्म शाश्वतम्।
चित्सामान्यं जगत्यस्मिन् परमानन्दलक्षणम्॥
वासुदेवादभिन्न तु वह्न्यर्केन्दुशतप्रभम्॥
स वासुदेवो भगवांस्तद्धर्मा परमेश्वर ॥
स्वदीप्तं क्षोभयित्वा विद्युद्वत्स्वेन तेजसा।
प्रकाशरूपी भगवानच्युत चासृजद्द्विज॥
सोऽच्युतोऽच्युततेजाश्च स्वरूप वितनोति च।
आश्रित्य वासुदेवं च धर्मो मेघदल यथा॥
क्षोभयित्वा स्वमात्मानं सत्य भास्वरविग्रहम्।

एव[184]।

तथैव अनिरुद्ध - प्रद्युम्न - संकर्षण - वासुदेवानां चतुर्णां क्रमेण हंस - नाद - व्योम - परमहंस इति संज्ञान्तरं पञ्चरात्रसंहितासूपलभ्यते[185]।

वासुदेवादीनां व्यूहदेवानां समन्त्रक समाराधनादिकं सात्त्वतसंहितायां विस्तरेणोपवर्ण्यते।

उपासकानां तत्तद्गुणानुसन्धानार्थं तत्तद्गुणाविष्कारेण भगवता स्वीकृता

---

उत्पादयामास तदा समुद्रो बुद्बुद यथा॥
स चिन्मयप्रकाशाख्या उत्पाद्यात्मनमात्मना।
पुरुषाख्यमनन्त च प्रकाशप्रसरं महत्॥
. . . .॥
. . . .
स च सत्यादभिन्नस्तु तस्मात्सत्य तथैव हि।
द्वाभ्यामेकात्मरूप यत्तदभिन्नमयोऽच्युतात्॥
आश्रित सस्थितस्ताभ्यामभेदेन सदैव हि।
पुमान् सत्योऽच्युतश्चैव चिद्रूप त्रितय तु तत्॥
शान्तसवित्स्वरूपे च वासुदेवेऽवतिष्ठते॥
सोऽन्तर्यामी प्रकाशात्मा चिद्रूप स प्रतिष्ठित॥
त्रितये यस्तथारूपोऽनिच्छात उदित सदा।
असकल्पात्मका सर्वे प्रसरन्ति परस्परम्॥
. . . . . .
गृह्णन्ति प्रतिबिम्बत्व दर्पणेष्विव दर्पणम्।
अतीव द्विज नैर्मल्यात्सक्रान्ताना परस्परम्॥
प्रविभागो न जायेत व्योमस्फटिकयोर्यथा।
भासाद्वयस्य विप्रेन्द्र तथा तेषामभिन्नता॥ ज ४ २-७, १२-५, १७,८

184 'सकर्षणप्रद्युम्नानिरुद्धानामेवाच्युतसत्यपुरुषापरनामधेयत्व बोध्यम्' - अल सा भा पृ २९

185 हसो नादस्तथा व्योम परमहसस्तथापर॥
चत्वारो गोचरा ह्येते मूर्तीना परमास्थिता।
हसोऽनिरुद्धो भगवान् प्रद्युम्नो नादगोचर॥
व्योम सकर्षणो देव परमहसस्तथा पर॥ नार १.४३ cd-५ab

एते वासुदेवादयो व्यूहावताराः इति पञ्चरात्रसमय ।

**3.5.1.2. व्यूहान्तरसृष्टिः**

वासुदेव - संकर्षण - प्रद्युम्न - अनिरुद्धेभ्य· चतुर्भ्यः व्यूहेभ्य प्रत्येकं त्रयस्त्रयः केशवादयो द्वादश देवा· व्यूहान्तरव्यपेदेश्याः संभवन्ति। तथा हि-

वासुदेवात् केशव - नारायण - माधवाः,

संकर्षणात् गोविन्द - विष्णु - मधुसूदनाः,

प्रद्युम्नात् त्रिविक्रम - वामन - श्रीधराः,

अनिरुद्धात् हृषीकेश - पद्मनाभ - दामोदराः

प्रादुर्भवन्ति[186]।

केशवादीनां व्यूहान्तराणां शक्तय. द्वादश भवन्तीति पञ्चरात्रसंहितासु निर्दिश्यते। ताश्च क्रमशः -

श्री·, वागीश्वरी, कान्ति·, क्रिया, शान्तिः, विभूतिः, इच्छा, प्रीति , रतिः, माया, धीः, महिमा चेति[187]।

केशवादीनां द्वादश मूर्तीनाम् आयुधानि पञ्चरात्रसंहितासु विस्तरेण

---

186. आम्नासिषुरमुष्याश्च रहस्याम्नायवेदिन ।
[illegible]विभावादीन् भेदान् सकल्पकल्पितान् ॥
[illegible] व केशवाद्या प्रकीर्तिता ।
केशवादित्रय तत्र वासुदेवाद्विभाव्यते ॥
सकर्षणाच्च गोविन्दपूर्व त्रितयमद्भुतम् ।
त्रिविक्रमाद्य त्रितय प्रद्युम्नादुदित मुने ॥
हृषीकेशादिक तद्वदनिरुद्धान्महामुने। अहि ५.४५-८ab

187 श्रीश्च वागीश्वरी कान्तिक्रियाशान्तिविभूतय ।
इच्छा प्रीती रतिश्चैव माया धीर्महिमेति च ॥
शक्तय केशवादीनाम् । लक्ष्मी २० ३५,६a, सा ८ ३१cd,२ab

कथ्यन्ते[१९१]।

---

[१९४] वामे पश्चिमगे चक्रं विद्धि शङ्खं तु दक्षिणे।
दक्षिणे मुख्यहस्तेऽब्जं गदा तदपरे तु वै।
एवं हि भगवान् धत्ते केशवः कमलादिकम्।
सव्यापसव्यहस्ताभ्यां मुख्याभ्यां तु गदाम्बुजे।
वामादौ शङ्खचक्रे तु सा धत्ते पश्चिमद्वये।
नारायणाख्यो भगवान् माधवाख्यं निबोध तु।
मुख्ये सव्यापसव्ये तु शङ्खं धत्ते गदां प्रभुः।
पश्चिमे पद्मचक्रे तु सर्वपूर्वे भुजद्वये॥
मूर्तित्रयमिदं दिव्यं कुन्देन्दुस्फटिकप्रभम्।
पद्मं मुख्यकरे वामे गदान्यस्मिन् हि दक्षिणे॥
विभोर्गोविन्दसंज्ञस्य इत्येवं समुदाहृतम्।
विन्यासं लाञ्छनानां च विष्णोरथ निबोध तु॥
वामदक्षिणपाणिभ्यामग्रतः शङ्खपङ्कजे।
एवं पश्चिमहस्ताभ्यां चक्रकौमोदकीद्वयम्॥
मधुसूदनसंज्ञस्य संनिवेशमतः शृणु।
पद्मं मुख्यकरे वामे पाञ्चजन्यं तु दक्षिणे॥
गदा पश्चिमतः सव्ये चक्रं दक्षिणतः परे।
चातुरात्म्याद् द्वितीयं तु पद्मरागोज्ज्वलद्युति॥
अथ प्रद्युम्नदेवानां त्रयाणां क्रम उच्यते।
अग्रतो वामपाणौ च चक्रमन्यकरे गदा॥
वामे तु पश्चिमे शङ्खं पद्मं तदपरे स्मृतम्।
विभोस्त्रिविक्रमाख्यस्य वामनस्यावधारय॥
गदाग्रवामहस्ते तु चक्रं मुख्ये तु दक्षिणे।
वामे तु पश्चिमे पद्मं शङ्खं तद्दक्षिणे करे॥
श्रीधरस्य गदा वामे मुख्यहस्ते प्रकीर्तिता।
चक्रमग्रेऽपसव्याख्ये शङ्खं वामे तु पश्चिमे॥
तदन्यस्मिन् करे पद्मं चक्रं कोटिसमप्रभम्।
हेमधामप्रभं ज्ञेयं चातुरात्म्यतया स्थितम्।
अतोऽनिरुद्धमूर्तीनां त्रितयं चावधारय।
पद्ममग्रकरे वामे तद्द्वितीये तु हेतिराट्।
सव्यापसव्यहस्ताभ्यां पश्चिमाभ्यां क्रमेण तु।
पद्मकोशं गदां गुर्वीं पद्मनाभे निबोध तु।

केशवादयो द्वादश व्यूहान्तरदेवा· पर - सूक्ष्म - स्थूलभेदेन त्रिविधा भवन्तीति पञ्चरात्रसंहितासु वर्ण्यते। स्वकारणान्तस्थास्ते केशवादयः परशब्देन, द्विभुजास्ते सूक्ष्मशब्देन, चतुर्भुजाः चक्राद्यायुधसहिताश्च ते देवाः स्थूला इति कथ्यन्ते[189]।

केशवादयो द्वादशव्यूहान्तरदेवाः उपासकानां शरीरे ललाटादिस्थानेषु स्थित्वा तेषां शरीररक्षणपुरःसरं भागवतानां तेषां सकलसंतापशमनं कुर्वन्तीति पाञ्चरात्रिका अभिप्रयन्ति।

वासुदेवादिचतुर्व्यूहात् क्रमेण द्वादशमूर्तयः, पुरुषोत्तमाद्यष्टमूर्तयश्च संबभूवु· इति पञ्चरात्रसंहिता· कथयन्ति[190]। चतुर्व्यूहः, द्वादशमूर्तय·, अष्टमूर्तयः- इत्येतेषां संकलितानां चतुर्विंशतिसंख्याकानां पाञ्चरात्रे चतुर्विंशतिमूर्तिसंज्ञया व्यवहारः प्रवर्तते।

### 3.5.1.3. विशाखयूपः

उपासकानां जाग्रत्स्वप्नसुषुप्तितुर्याख्याश्चतस्रो दशा भवन्ति।

---

अग्रगे चक्रराड् वामे पद्म मुख्यकरे परे।
वामे गदां पश्चिमगे तदन्यस्मिंश्च शङ्खराट्।
धत्ते दामोदरे वामे गदा चाग्रस्थिते शुभाम्।
अपसव्येऽग्रगे शङ्ख वामे चक्र तु पश्चिमे।
पश्चिमे त्वपसव्ये तु कमल सूर्यवर्चसम्।
अतसीपुष्पसकाशमिदं मूर्तिगण स्मृतम्। पौ ३६.१४६-६८

189 परा स्वकारणन्तस्था सूक्ष्मास्ते द्विभुजा· स्मृता ॥
चतुर्भुजास्ते विज्ञेया स्थूलास्त्रिभुवनेश्वरा·।
अहि ५ ४८cd, ९ab

190 पाद्म. (ज्ञा) २.६-३४, विश्वा. ४ २-२१
पाद्मसंहिता पुरुषोत्तम - अधोक्षज - नृसिंह - अच्युत - जनार्दन - उपेन्द्र - हरि - कृष्णा अष्टमूर्तय इति (पाद्म. ज्ञा. २. २६-८), विश्वामित्रसहिता अधोक्षज - नृसिह - वामन - भार्गव - जनार्दन - उपेन्द्र - हरि - कृष्णा अष्टमूर्तय इति (विश्वा. ४.२०,१) अष्टमूर्ती निर्दिशति।

विषयान्तरसंचारबाहुल्येऽपि भगवत्स्मरणवत्त्वं जाग्रत्प्रायत्वम्। ध्यानपरिपाकेन बहिरिन्द्रियव्यापारनिरोधेऽपि स्वप्नदृक्पुरुषवदन्तरिन्द्रियमात्रव्यापारवत्त्वं स्वप्नप्रायत्वम्। अल्पविषयान्तरसंचारेऽपि परिचयाधिक्येन भगवत्स्मरणबाहुल्यं स्वप्नप्रायत्वमिति यावत्। स्वप्नदशोपासकापेक्षयाधिकध्यानपरिपाकवत. विषये ष्वन्तरिन्द्रियस्यापि व्यापारराहित्यं सुषुप्तप्रायत्वम्। पुष्कलध्यानपरिपाकमहिमवतः केवलस्वात्मानुभववत्तैलधारावदविच्छिन्न-भगवत्स्मृतिसंततित्वं तुरीयप्रायत्वम्। एवं च तुर्विधावस्था ध्यातारः[191]। तासां दशानामनिरुद्धप्रद्युम्नसंकर्षणवासुदेवाख्याश्चत्वारो व्यूहा अधिष्ठातार-स्तत्तद्दशास्थैरुपासकैरुपास्या भवन्ति।

वासुदेवादिव्यूहः चातुरात्म्यपदेनाभिधीयते। तुर्यव्यूह - सुषुप्तिव्यूह-स्वप्नव्यूह - जाग्रद्व्यूहाभिधाना. वासुदेव - संकर्षण - प्रद्युम्न - अनिरुद्धाः जगद्व्यापार-करणार्थ चतुर्व्यूहोपासननिरतानां योगिनां ध्यानालम्बनार्थं ध्यायिनां खेदशान्तये च विशाखयूपसंज्ञके तेजोरूपे स्तम्भविशेषे व्यक्ततां यान्ति इति पञ्चरात्रसंहितासु उपवर्ण्यते।

परमव्योम्नि शुद्धसत्त्वद्रव्यपरिणामरूप· करचरणादिरहितः स्थूलाकारो महत्तरायामपरिणाहो विशाखयूपाख्यः कश्चिद्भगवतो रूपविशेषोऽस्ति। स्तम्भरूपे विशाखयूपे अध· प्रदेशमारभ्योपर्युपरि चत्वरो भागाश्चतुरश्रा वर्तन्ते। ते च भागाश्चत्वारः जाग्रत्स्वप्नसुषुप्तितुरीयसंज्ञकाः। तत्र विशाखयूपस्य मूलादुपरि कचिन्मध्यप्रदेशे जाग्रत्संज्ञकं स्थानम्, तदुपरि स्वप्नसंज्ञकम्, तदुपरि सुषुप्तिसंज्ञकम्, अग्रप्रदेशे तुरीयसंज्ञकम्। प्रतिभागं चतुर्ष्वपि पार्श्वेषु भगवान् परवासुदेवः वासुदेव - संकर्षण - प्रद्युम्न - अनिरुद्धरूपेण क्रमेण प्रागादिदिक्षु अवतिष्ठते। तत्र प्रथमो भागः जाग्रत्पदाभिमान्यनिरुद्धप्रधानः। तत्र ते वासुदेवादयो व्यूहदेवा. स्पष्टदृश्यरूपायुधमहिष्यादिपरिच्छदा भान्ति। जाग्रत्पदस्थोपास-

191. तत्त्वत्र. व्या, श्रीमद्र पृ. २४१

कानुग्रहाय तथा प्रकाशमानस्य वासुदेवसंकर्षणादिमूर्ति-चतुष्टयस्य सृष्टिस्थित्यादिजगद्व्यापार· विशेषतया परिगण्यते।

जाग्रत्पदादुपरि द्वितीयो भाग. स्वप्नपदाभिमानिप्रद्युम्नप्रधानक । स्वप्नस्थाने च स्वप्नसंज्ञकाः वासुदेवादयो व्यूहा. अस्पष्टदृश्यै-र्मलिनप्रायैरायुधवाहनमहिष्यादिपरिच्छदैर्वर्तन्ते । एते च स्वप्नपदस्थोपास-कानुग्रहाय तथा भासन्ते । स्वप्नस्थानमूर्तिचतुष्टये जगद्व्यापारेच्छामात्रम्, जाग्रद्व्यूहं प्रति हेतुतयाऽवस्थानं चास्य विशेष· । तत्र वर्णानामनुत्कटत्वम्, आयुधादिमत्त्वेपि ध्वजाद्युपकरणराहित्यं चेति विशेषः परिगण्यते।

स्वप्नपदादुपरि तृतीयो भागः सुषुप्तिस्थानाभिमानिसंकर्षणप्रधान रेखामात्रदृश्यायुधादिपरिच्छदैर्देवैरध्यासितः । सुषुप्तिपदस्थानुग्रहाय तथा प्रकाशमानानां वासुदेवादीनां सृष्ट्यादीच्छापि नास्ति, किं तु स्वानन्दानुभवमात्रम्। तत्र प्राग्भागस्थवासुदेवाख्यव्यूहस्य करचरणादियुक्तविग्रहो नास्ति, किं तु विशाखयूपस्य शाखावत्परिणतेन शुद्धसत्त्वद्रव्यैकदेशेन शरीरतया योगमात्रं षाड्गुण्यप्रकाशनामात्रं च। दक्षिणभागादिस्थितानां संकर्षणादिसंज्ञानां द्वितीयादिमूर्तीनां च करचरणादियुक्तविग्रहवत्वेऽपि आयुधादिक नास्ति, अपि तु करतलेषु रेखारूपशङ्खलाङ्गलाद्यायुधचिह्नवत्वं सितरक्तादिवर्णभेदाभावश्चेति विशेषः उपवर्ण्यते।

सुषुप्तिपदादुपरि तुरीयस्थानाभिमानिवासुदेवप्रधानोऽत्यन्तादृश्या-युधादिपरिच्छदैः शून्यकल्पैर्देवैरध्यासितश्चतुर्थो भाग· । एते च तुरीयपदस्थोपासकानुग्रहाय तथा वर्तन्ते।

सुषुप्तिपदकारणभूते मूर्तिचतुष्टये तुरीयस्थे चतुर्णामपि करचरणादियुक्तविग्रहो नास्ति, अपि तु सुषुप्तवासुदेवतुल्यत्वम्; तत एव चेतनव्यापारराहित्यम् । प्राग्भागस्थ वासुदेवस्य षाड्गुण्यप्रकाशनमितरेषां तत्तद्गुणद्वन्द्वप्रकाशनं च विशेष. ।

उपासितृपुरुषगतजाग्रदादिदशासाम्यमाकलय्य विशाखयूपे जाग्रदादिव्यवहार.।

व्यूहचतुष्टये एकस्यैव परमात्मनो परवासुदेवस्य चातूरूप्यमिति पाञ्चरात्रिका विश्वसन्ति । गगनमण्डलस्थित. सविता जलपात्राणि वापीतटाकादीन्याश्रित्य यथा बहुधा दृश्यते तथा एकोऽपि भगवान् नानामन्त्राश्रयेषु तुर्यादिपदसंस्थानान्याश्रित्य बहुत्वमापद्यत इत्यस्ति पाञ्चरात्रसिद्धान्तः ।[191a]

जाग्रद्व्यूहादीनां लक्षणानि, युगभेदेन युगसन्धिभेदेन च रूपभेदादिकं पञ्चरात्रसंहितासु विस्तरेणोपवर्ण्यते।

विशाखयूपोऽयं सर्वेषां विभवदेवानां प्रधान इति स एव पद्मनाभादीनां विभवानामुत्पत्तौ हेतुरिति च पाञ्चरात्रिकैरुच्यते।

### 3.5.1.4. विभवसृष्टिः

विभवो नाम तत्तत्सजातीयरूपेणाविर्भाव·। देवतिर्यङ्मनुष्यस्थावराणां सजातीयत्वेन सर्वेश्वरस्य साक्षादवतरणं विभव इति यावत् । परस्वरूपेणाजहत्स्वभावतया मुख्यावतारा विभवाः मुमुक्षुभिरुपास्यन्ते । विशाखयूपाख्यानिरुद्धादेव पद्मनाभादयो विभवा अवतरन्तीति पञ्चरात्रसंहिताः कथयन्ति[192]।

अष्टत्रिंशद्विभवावताराः पाञ्चरात्रे प्रथन्ते। ते च यथा -

| | |
|---|---|
| 1. पद्मनाभ. | 2. ध्रुवः |
| 3. अनन्त· | 4. शक्तीशः |
| 5. मधुसूदन. | 6. विद्याधिदेवः |

---

191.a विशाखयूपस्य वर्णन सात्वतसहिताया (परि ४ श्लो ७ - २०, ३२-५) तथा लक्ष्मीतन्त्रे (अ ११ श्लो ८ - १८) द्रष्टव्यम्।

192 विशाखयूप एवैष विभवान् भावयत्युत। लक्ष्मी. २२. १८ ab
विभवोऽनन्तरूपस्तु पद्मनाभमुखो विभो ।
अनिरुद्धस्य विस्तारो ॥ Ibid २.५८cd, ९ab

| | |
|---|---|
| 7. कपिल· | 8. विश्वरूपः |
| 9. विहङ्गमः | 10. क्रोडात्मा |
| 11. बडवावक्त्रः | 12. धर्म· |
| 13. वागीश्वरः | 14. एकार्णवशायी |
| 15. कमठः | 16. वराहः |
| 17. नृसिंह· | 18. अमृताहरणः |
| 19. श्रीपतिः | 20. कान्तात्मा |
| 21. राहुजित् | 22. कालनेमिघ्न· |
| 23. पारिजातहरः | 24. लोकनाथः |
| 25. दत्तात्रेयः | 26. न्यग्रोधशायी |
| 27. एकशृङ्गतनुः | 28. वामनः |
| 29. त्रिविक्रमः | 30. नर· |
| 31. नारायणः | 32. हरिः |
| 33. कृष्णः | 34. परशुरामः |
| 35. श्रीरामः | 36. वेदवित् |
| 37. कल्की | 38. पातालशयनः |

इति[193] ।

क्वचित्पुनः विशाखयूपस्यापि संयोज्य एकोनचत्वारिंशो विभवावतारा

193. Ibid ११. १९ - २५

इत्युच्यन्ते[194]।

पद्मनाभादीनां विभवदेवानां महिष्यो यथा -

धीस्तारा वारुणी शक्तिः पद्मा विद्या तथैव च।
संख्या विश्वा खगा भूर्गौर्लक्ष्मीर्वागीश्वरी तथा॥
अमृता धरणी छाया नारसिंही सुधा तथा।
श्रीः कीर्तिर्विश्वकामा मा सत्या कान्तिः सरोरुहा॥
माया पद्मासना खर्वा विक्रान्तिर्नरसंभवा।
नारायणी हरिप्रीतिर्गान्धारी काश्यपी तथा॥
वैदेही वेदविद्या च पद्मिनी नागशायिनी[195]।

इति। व्यूहादिदेवा इव तन्महिष्योऽपि षाड्गुण्यपूर्णाः।

विभवदेवानां पद्मनाभादीनां विशाखयूपाख्योऽनिरुद्धः कारणमिति लक्ष्मीतन्त्रे[196] उच्यते। पाद्मसंहितायां[197] तु अन्यथा वर्ण्यते। यथा - व्यूहवासुदेवात् मत्स्य - कूर्म - वराहाणाम्, संकर्षणात् नृसिंह - वामन - परशुरामाणां, प्रद्युम्नात् राघव - बलरामयोः, अनिरुद्धात् श्रीकृष्णकल्क्योः इति मत्स्यादीनां विभावानामवतार प्रतिपाद्यते।

लोकहितार्थं देवमनुष्यादिषु आविश्य भगवतः अवतरणं विभवान्तरसृष्टिरिति आवेशावतार इति वा उच्यते[198]।

---

194 द्र सा ९

195 लक्ष्मी २० ४५-८

196. Ibid ११ १८ab

197. पाद्म. (ज्ञा) २ ३१-३ab

198 आविश्याविश्य कुरुते यत्र देवनरादिकम्।
जगद्धित जगन्नाथस्तज्ज्ञेय विभवान्तरम्॥ लक्ष्मी ४ ३०

आवेशावतारः स्वरूपावेश - शक्त्यावेशभेदेन द्विविध. । परशुरामादि-चेतनशरीरेषु भगवतः दिव्यमङ्गलविग्रहेण साकमावेश· स्वरूपावेश इति, सृष्टिसंहारादिकार्येषु प्रस्तुतेषु ब्रह्मरुद्रादौ भगवत· शक्तिमात्रावेशः शक्त्यावेश इति च परिगण्यते ।

एतदतिरिक्ततया[199] पञ्चरात्रसंहितासु व्यूहवासुदेवादिभ्यः अष्टमूर्त्यादयो समजायन्त इति वर्ण्यते । तथा हि -

व्यूहवासुदेवात् ब्राह्मी - प्राज्यपत्या - वैष्णवी - दिव्या - आर्षी - मानुषी - आसुरी - पैशाची चेति अष्टौ मूर्तयः, ▫ बुद्ध - त्रैलोक्यमोहन - दाशार्ह-शौरि - अन्नेशाः पञ्चमूर्तयश्च संजाताः ।

संकर्षणात् हयग्रीव - शङ्खोदर - नृकेसरि - वैकुण्ठमूर्ति - मुकुन्द - वृषाकपि - वराह - अनन्तमूर्तय., सुदर्शनाद्यायुधानि, किरीटादिविभूषणानि, श्रीप्रभृतयो देव्यः, श्रीवत्स, गरुडश्चेत्येते समभूवन् ।

अनिरुद्धस्य पादतः कुमुदाद्याः भूतेशाः पारिषदै· सह जज्ञिरे ।

सहस्रशीर्षचरणहस्तनेत्राद्भुताकृते. अनिरुद्धात् (अङ्गात्) सदेवासुरमानुषं जगत्; (मुखात्) इन्द्रवह्नी, चत्वारो वेदा·, षडङ्गानि; (मूर्ध्नो) द्यौः; (चक्षुषो) रविः; (मनसः) चन्द्रमाः, (श्रोत्राद्) दिशः; (नाभे ) नभ ; (प्राणात्) वायु·; (अपानात्) मृत्युः; (केशेभ्यो) मेघः; (शरीरात्) कालभेदा ; (रोमकूपेभ्यः) सवनस्पतय ओषधय·, सदक्षिणा यज्ञा·; (मुखात्) ब्राह्मणाः; (बाहुभ्यां) क्षत्रियाः; (ऊरुभ्यां) वैश्या·; (पद्भ्यां) शूद्राश्च संबभूवुः[200] ।

---

199. विभव - विभवान्तराणाम् इति । यावत् ।
200. पाद्म ज्ञा, २ २९-४५; विश्वा ४ २२-३८

---

▫ बुद्धसञ्ज्ञकस्य स्थाने बभ्रूसञ्ज्ञक विश्वामित्रसहितया पठ्यते ।

### 3.5.1.5. अर्चासृष्टिः

देवालयेषु प्रतिष्ठिता बिम्बविशेषाः अर्चानाम्ना व्यवह्रियन्ते। स्वयंव्यक्तसैद्धदिव्यार्षप्रक्रियया भक्तजनप्रार्थनानुगुणं देशकालविप्रकर्षराहित्येन भक्त्या शुद्धभावं गतानां शास्त्रीयसंस्कारेण भगवद्भावनावतां सकलानां मनुजानां नयनविषयतां गतं सर्वातिशयि षाड्गुण्यं सर्वसहिष्णु क्षीरनीरन्यायेन बिम्बाकृतिसदृशाकृतिरहितं भौतिकविग्रहेष्वनुप्रविष्टं परव्यूहविभवादिलक्षणमेव दिव्यमङ्गलविग्रहात्मकमर्चारूपम्[201]। विग्रहेषु भगवतः अनुप्रवेशः अर्चासृष्टिरिति पाञ्चरात्रिका आमनन्ति।

### 3.5.2.0. शुद्धेतरसृष्टिः

व्यूहेभ्यः विभवेभ्यश्च शुद्धेतरा सृष्टिः प्रवर्तत इति पञ्चरात्रसंहितासु उपवर्ण्यते[202]। अष्टाविंशतितत्त्ववादोऽयं पञ्चरात्रसिद्धान्त इति शुद्धेतरसृष्टिपरिशीलनेनावगम्यते। यथा - पुरुषः, शक्तिः, नियतिः, कालः, प्रकृतिः, महान्, अहंकारः, एकादशेन्द्रियाणि, पञ्च तन्मात्राणि, पञ्च महाभूतानि चेति।

### 3.5.2.1. पुरुषः

पुरुषः समस्तानां जीवानां समष्टिरूपः[203], जीवसमष्टिरूपात्

---

201 अर्चापि लौकिकी या सा भगवद्भावितात्मनाम्॥
मन्त्रमन्त्रेश्वरन्यासात्सापि षाड्गुण्यविग्रहा। लक्ष्मी. २.५९cd, ६०ab, दर्श. पृ. २२८

202 भूते शुद्धिमयी स्फूर्ति सा व्यूहवैभवात्मिका॥
।
अथ शुद्धेतरा सृष्टिस्तन्मूलैव प्रवर्तते॥ अहि ६.६cd,७cd

203 समष्टिर्या मनूना सा पुरुषो द्विचतुर्मय॥ Ibid ६.११cd

हिरण्यगर्भात् सर्वे जीवाः प्रसरन्ति प्रलये च विलीयन्ते[204], कूटस्थानां मनूनां समष्टिरूपाः सर्वे जीवाः कर्मपरवशाः सन्तः आविर्भावतिरोभावैः स्थानात् स्थानान्तरं गत्वा अवतरन्तीति[205], जीवसमष्टिरूप· पुरुषः प्रकृत्या बद्धः कर्मवशीभूतः परमव्योम्नः अर्वाचीने स्थाने तिष्ठतीति[206] च पञ्चरात्रसंहितासु पुरुषतत्त्वमुपवर्ण्यते। निर्गुणोऽपि पुरुष· प्रकृतेः संबन्धात् सगुणत्वेन अनेकधा भाति[207]। दीपादुत्पन्न. दीप यथा पूर्वत· प्रवृद्धो भाति तथा जीवस्य संतानः देहमाश्रित्य भाति[208]। प्रकृत्या बद्ध· कर्मवशीभूत· सः परमव्योम्नः अर्वाचीने स्थाने तिष्ठति[209]। हिरण्यगर्भाख्य· पुरुषः[210] स्वत· शुद्धः, परिणामरहित ,

---

204. पुरुषो भोक्तृकूटस्थ सर्वज्ञ सर्वतोमुख ।
अंशत प्रसरन्त्यस्मात्सर्वे जीवा सनातना ॥ लक्ष्मी ७ ११

205. मनवो नाम कूटस्थास्तेषामुक्ता समष्टय ॥
क्लेशाशया परामृष्टा सर्वज्ञा सर्वतोमुखा ।
नित्यसिद्धा हि भूत्यशास्ते प्रोक्ता भगवन्मया ॥
आविर्भावतिरोभावै स्वस्मिन्नात्मनि नारद।
आत्मनो वर्तयन्तस्ते वैष्णवा आधिकारिका ॥
विष्णो सकल्परूपेण स्थित्वाऽस्मिन् पौरुषे पदे।
योगेनावतरन्त्यंशै स्थानात्स्थानं धरावधि॥ अहि. ६ ३८cd-४१

206. उक्त कर्माधिकारो य पुरुषस्ते चतुर्युग ॥
अस्मात्स परमव्योम्नस्तिष्ठत्यर्वाचि वै पदे। Ibid ६ ३२ cd, ३ab

207. निर्गुणोऽपि पुमान् भाति स्फटिकोऽन्यैरिवान्वित ॥ वि. ४. ११ cd

208 दीपाद्दीपो यथा वृद्धि प्राप्य भाति ततस्तत ।
तथा जगति जीवस्य वृद्धिरद्य प्रपञ्चित ॥ वि. ति २ ३२

209 उक्त कर्माधिकारो य पुरुषस्ते चतुर्युग ॥
अस्मात्स परमव्योम्नस्तिष्ठत्यर्वाचि वै पदे। अहि. ६ ३२cd, ३ab

210. भोक्तृकूटस्थो जीवसमष्टिरूप. पुरुषो हिरण्यगर्भ । कृष्ण लक्ष्मी टि पृ २७

कूटस्थ , नित्यः, अनन्त , अप्रतिसंक्रमश्च[211] इति पुरुषतत्त्वं पञ्चरात्रसंहितासूपपाद्यते।

### 3.5.2.2. शक्तिः

संकल्पचोदितात् अनिरुद्धात् शक्तिः सृज्यते। स्वमूर्तिगां तां शक्तिमादाय सृष्टिं संवर्धयत्यनिरुद्ध·[212] इति एकत्र, महालक्ष्मी· शक्तिरित्युच्यत[213] इत्यन्यत्र शक्तितत्त्वं वर्ण्यते।

### 3.5.2.3. नियतिः

शक्तेः सकाशात् कालस्य नियत्याख्यः सर्वनियामकः परिणामभेदः प्रादुर्भवति[214]। महाविद्या नियतिरित्युच्यते[215]।

### 3.5.2.4. कालः

कालस्य कलनात्मकं पावनं रूपं नियतितः उदेति। विष्णुसंकल्पचोदित· स· काल· सर्वं कार्यं कलयति[216]। कालस्य प्रकृतिपुरुषतत्त्वद्वयपाचकत्त्वं,

---

211. अय स्वरसत शुद्ध परिणामविवर्जित ।
कूटस्थश्चिद्घनो नित्यो ह्यनन्तोऽप्रतिसक्रम ॥ लक्ष्मी. १६. १४

212. अन्त स्थपुरुषा शक्ति तामादाय स्वमूर्तिगाम्।
सवर्धयति योगेन ह्यनिरुद्ध स्वतेजसा॥ अहि. ६. १४.

213. महालक्ष्मी समाख्याता शक्तितत्त्व मनीषिभि । लक्ष्मी ७ १३ab

214. कालस्य नियतिर्नाम सूक्ष्म सर्वनियामकः॥
उदेति प्रथम शक्तेर्विष्णुसकल्पचोदित । अहि. ६ ४६cd, ७ab

215. नियतिस्तु महाविद्या । लक्ष्मी. ७ १३c

216 कालस्य पावन रूप यत्तु तत्कलनात्मकम्।
उदेति नियते सोऽथ काल सकल्पचोदित ॥

काल· स कलयत्येको विष्णुसकल्पचोदित ॥
कलयन्यखिल काल्यं नदीकूल यथा रय । अहि ६ ४९, ५०cd, १ab

सर्वात्मत्वं च पञ्चरात्रसंहितासु निर्दिश्यते। परात्परं पुरुषार्थं काल· विभज्यते। भूतभव्यभविष्यदात्मकं सर्व कालादेव प्रवर्तते। ग्रहनक्षत्रराशीनां गतिः आवृत्तिश्च कालादेव भवति। अयने, ऋतवः, मासाः, पक्षा·, तिथय , सवनानि, यामाः, मुहूर्ताः, नाड्य·, कलाः, विनाड्य·, प्राणा इति द्वादशधा कालस्य विभाग·[217] इति कालतत्त्वं पञ्चरात्रसंहितासु उपवर्ण्यते। षाड्गुण्ये यत् बलादिकं त्रिकं (बल-ऐश्वर्य - वीर्यरूपम्) तत् कालरूपेण सृष्टौ परिवर्तते। कालः स्वतः अपरिणामी भवति[218]। काली एव काल·[219]।

### 3.5.2.5. प्रकृतिः

शक्तेः गुणमयं रूपं कालात् क्रमेण उत्पद्यते। कालात् सत्त्वं, तस्माद्रजः, तस्मात् तमो नाम गुणः अभवत्[220]। एतत्त्रैगुण्यमेव प्रकृतिरित्युच्यते सर्वविकारान्

---

217. कालः सृजति भूतानि काल सहरति प्रजा ।
काल सर्वेषु जागर्ति कालो हि दुरतिक्रम ॥
कालो विभजते सर्व पुरुषार्थ परापरम्।
भूत भव्य भविष्यच्च सर्व कालात्प्रवर्तते ॥
ग्रहनक्षत्रराशीना गतिरावृत्तिलक्षणम्।
तयोस्तस्य परिच्छेदो बहुधा सप्रवर्तते ॥
तस्य द्वादशभिर्भेदैर्विभाग परिकीर्तित ।
अयने ऋतवो मासा पक्षाश्च तिथयस्तथा ॥
सवनानि तथा यामा मुहूर्ता नाड्य एव च।
कलाश्चैव विनाड्यश्च प्राणाश्च द्वादश स्मृता ॥ पर २. ६७-७१

218. बलादिक तु यत्पूर्वं षाड्गुण्ये त्रिकमीरितम् ॥
तदेतत्कालरूपेण सृष्टौ सपरिवर्तते।

219. स्वतश्चापरिणामीदम् . . . . ॥ लक्ष्मी ५. २५cd, ६abc
. . . . काल काली प्रकीर्तिता ॥ Ibid. ७ १३d

220 सत्त्व तत्र लघु स्वच्छ गुणरूपमनामयम् ॥
प्रथम व्यज्यते कालात् . ।
रजो नाम गुण सत्त्वादाविर्भवत्यलम्।
. . . . . .

प्रकरोतीति।

अचेतना परार्था नित्या सततं विक्रियमाणा त्रिगुणा प्रकृतिः[221]। गुणत्रयसाम्यरूपा प्रकृतिरेव अविद्येति, मायेति चाभिधीयते[222]। त्रयोविंशतितत्त्वानां मूलभूता प्रकृति· अव्यक्तेति[223], अनादिम्, अजम्, गुणत्रययुक्तं प्रधानमिति[224] च कीर्त्यते। प्रकृते· स्वभाव., योनिः, अक्षरम्, अयोनि·, गुणयोनिः इत्यादय· शब्दाः पर्याया·[225]।

सत्त्वरजस्तमांसि गणत्रयमित्युच्यते। सत्त्वं प्रकाशात्मकं सुखरूपं, स्वच्छं, ज्ञानकरं, लघु इति; रजः क्रियात्मकं, दु.खरूपं, चलं, रक्तं, प्रवर्तकम् इति; तमः आवरणं, मोहरूपं, गुरु, कृष्णं, नियामकम् इति त्रयाणां गुणानां लक्षणम्[226]।

---

. . . . तमो नाम गुणोऽभवत् — अहि ६. ५२cd, ३a,५५ab,५९b

221 अचेतना परार्था च नित्या सततविक्रिया।
त्रिगुणा कर्मिणा क्षेत्र प्रकृते रूपमुच्यते॥ — पर २. १८

222 गुणत्रयस्य यत्साम्य साऽविद्याऽनेकरूपिणी॥ — ज. ४. ५५cd
गुणत्रयमयी विद्या मायेति ह्यवधारय। — वि. ति. २ ११६ab

223 विशत्या च त्रिभिश्चैव विकारै स्वै समन्विता॥
इय प्रकृतिरव्यक्ता कथिता ते सुराधिप। — लक्ष्मी १६. ११cd, २ab

224. अनादिमजमव्यक्तं गुणत्रयमय द्विज।
विद्धि प्रदीपस्थानीय भिन्नमेकात्मलक्षणम्॥ — ज. ३ २

225 गुणसाम्यमविद्या च स्वभावो योनिरक्षरम्।
अयोनिर्गुणयोनिश्चेत्याद्यास्त्रैगुण्यवाचका॥ — अहि. ६. ६३

226. सत्त्व रजस्तमश्चेति गुणत्रयमुदाहृतम्।
सुखरूप स्मृतं सत्त्व स्वच्छ ज्ञानकर लघु॥
दु खरूपं रजो ज्ञेयं चल रक्त प्रवर्तकम्।
मोहरूपं तमो ज्ञेय गुरु कृष्णं नियामकम्॥ — लक्ष्मी. ७ १४,५
सत्त्व सुखं रजो दु ख तमो मोहश्च ते गुणा।
. . . .॥

## 3.5.2.6. महत्

पुरुषेणाधिष्ठितात् विष्णुसंकल्पप्रेरितात् कालेन कलिताच्च गुणसाम्यरूपात् प्रकृतितत्त्वात् महदाख्यं (बुद्धि) तत्त्वमुत्पद्यते[227]। गुणाना वैषम्यस्य प्रथमः समुन्मेषः महान् इत्युच्यते[228]। महत्तत्त्वस्य विद्या, गौः, यवनी, ब्राह्मी, वधूः, वृद्धिः, मतिः, मधुः, अख्यातिः, ईश्वरः, प्राज्ञ इत्येते पर्यायशब्दाः[229]।

महत्तत्त्वं सत्त्वगुणानुरोधेन बुद्धिः प्राणः काल इति त्रिधा भिद्यते। बुद्धिः अध्यवसायव्यापारा, प्राणः प्रयत्नव्यापारः, काल त्रुटिलवादिरूपः[230]।

त्रिगुणात्मिका बुद्धिः महदाख्या गुणेभ्यः हेतुभ्यः अष्टविधा जायते। तत्र सत्त्वात् सुखात्मिका, रजसः दुःखसंयुता, तमसः मोहसंस्पृष्टा बुद्धिर्जायते। तत्र सात्त्विकानि धर्म - ज्ञान - वैराग्य - ऐश्वर्याणि चत्वारि, अवैराग्यं राजसं

---

लघु प्रकाशकं सत्त्वं, क्रियानिर्बन्धकृद् रज ।
तमो गुरुनिरुद्धचेते . . . . ॥ वि ४ ८ab,९abc

227. पुरुषाधिष्ठितात्तस्माद्विष्णुसंकल्पचोदितात्।
कालेन कलिताच्चैव गुणसाम्यान्महामुने॥
महान्नाम महत्तत्त्वमव्यक्तादुदितं मुने। अहि ७ ७,८ab
गुणसाम्यात्मनस्तस्मात्पुरुषाधिष्ठितात्पुन ।
अजायत महत्तत्त्व त्रिविध त्रिविधैर्गुणै ॥ पाद्म (ज्ञा) ५ ११
गुणत्रयसमूहाद्धि धर्मज्ञानादिलक्षणा॥
बुद्धि . . . ज ३ ३cd, ४a

228. वैषम्यस्य समुन्मेषो गुणाना प्रथमो हि य ॥
स महान्नाम . . . . . . . लक्ष्मी १६ १cd,२a

229. विद्या गौर्यवनी ब्राह्मी वधूर्वृद्धिर्मतिर्मधु ॥
अख्यातिरीश्वर प्राज्ञेत्येते तद्वाचका मुने। अहि ७ ८cd,९ab

230. सात्त्विको बुद्धिरित्युक्तो राजसः प्राण एव हि॥
तामस काल इत्युक्तस्तेषां व्याख्यामिमा शृणु।
बुद्धिरध्यवसायस्य प्राण प्रयतनस्य च॥
काल कलनरूपस्य परिणामस्य कारणम्। लक्ष्मी १६ २cd-४ab

रूपमेकम्, अधर्म - अज्ञान - अनैश्वर्याणि त्रीणि तामसानि रूपाणि[231] । महत्तत्त्वस्य सात्त्विकं रूपं धर्मः, ज्ञानं, विरागः, ऐश्वर्यमिति; तस्य तामसं रूपम् अधर्मः, अज्ञानम्, अवैराग्यम्, अनैश्वर्यम् इति[232] प्रकारान्तरेण निर्दिश्यते।

तत्र सत्त्वगुणयुक्तबुद्धिकार्यभूतो धर्मः मानसो वाचिकः कायिकश्चेति त्रिविधः[233]।

धर्मार्थकाममोक्षाङ्गतया ज्ञानं चतुर्विधम्[234]।

विवेककृतनिर्वेदकृतभेदेन वैराग्यं द्विविधम्[235]।

### 3.5.2.7. अहंकारः

महत्तत्त्वादहंकारो जायते[236]। अहंकारस्य अभिमानः, प्रजापतिः, अहंकृतिः, अभिमन्ता, बोद्धा इति पर्यायवाचकाः शब्दाः[237]।

---

231 महदाख्याष्टधा बुद्धिर्जाताव्यक्ताद् गुणैस्त्रिभिः।
चतुरेकत्रिभेदा सा बुद्धिरष्टविधा स्मृता॥
धर्मो ज्ञानं च वैराग्यमैश्वर्यं सत्त्वबुद्धय।
अवैराग्य रजोबुद्धिरधर्माद्यास्तमोधिका॥ वि ४ १४.५
प. २ ४१ - ४

232 धर्मो ज्ञानं विरागश्चाप्यैश्वर्यमिति सञ्ज्ञया॥
महत सात्त्विक रूप चतुर्धा प्रविभज्यते।
अधर्माज्ञानावैराग्यमनैश्वर्यं च तामसम्॥ अहि. ७ ११cd, २

233 यमश्च नियमो धर्मो मनोवाक्कायजक्रिय।
देवप्रसादनायासौ कर्तव्यो मोक्षकाङ्क्षिभि॥
श्रद्धा धृति प्रसादाख्यो मानसो धर्म उत्तम।
सत्यप्रियहितालापो वाग्धर्म इह कीर्तित॥
शारीर परिचर्याशुद्ध्यनुग्रहमयस्त्रिधा। वि ४. १६. ८ab

234. ज्ञान तु मोक्षधर्मार्थकामाङ्गत्वाच्चतुर्विधम्॥ Ibid १९cd

235 द्विधा विवेकनिर्वेदकृतं वैराग्यमिष्यते।
आद्यमाभ्यन्तर मुक्त्यै बाह्यमन्यत्तु बन्धनम्॥ Ibid ४. २०

236 महतोऽपि विकुर्वाणादहकारो व्यजायत॥ लक्ष्मी १६.४cd

237 अहकारोऽभिमानश्च प्रजापतिरहकृति।
अभिमन्ता च बोद्धा चेत्यस्या पर्यायवाचका॥ अहि ७. १६

कामक्रोधलोभमनोऽवमतितृषा. अहंकारस्य रूपाणि[238]।

अहंकारस्य सात्त्विकं रूपं वैकारिकमिति, राजसं रूप तैजसमिति, तामसं रूपं भूतादिरिति च उच्यते[239]।

वैकारिकाहंकारात् पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि च जायन्त इति अहिर्बुध्न्यसंहिता निर्दिशति[240]।

वैकारिकाहंकार· ज्ञानेन्द्रियाणां, राजसाहंकारः कर्मेन्द्रियाणां कारणमिति लक्ष्मीतन्त्रम्[241] - परमसंहिता[242] - विष्णुसंहिता[243] - विष्णुतिलकसंहिता[244] - पाद्मसंहिताः[245] कथयन्ति।

अहंकारान्मन उत्पद्यत इति अहिर्बुध्न्यसंहिता निर्दिशति[246]। तैजसाहंकारात् संकल्पसाधनरूपं द्विरूपं मनः जायत इति परमसंहिता[247] -

238 काम क्रोधश्च लोभश्च मनश्चावमतिस्तृषा।
इत्यहकृतिरूपाणि ॥ Ibid. ७ १८abc

239 तस्य वैकारिक नाम रूप सात्त्विकमुच्यते।
तैजस राजस रूप भूतादिर्नाम तामसम् ॥ Ibid. ७ २७

240 अहि ७.

241 जात सत्त्वसमुद्रिक्ताद्बुद्धीन्द्रियगणो महान्।
कर्मेन्द्रियगणश्चापि राजसात् ॥ लक्ष्मी १६ ६

242 वैकारिकादहकारात् पञ्च बुद्धीन्द्रियाणि तु।
समुत्पन्नानि यैर्ज्ञान पुरुषस्येह सिद्ध्यति ॥
कर्मेन्द्रियाणि पञ्चैव कर्मारम्भाणि तैजसात्। पर. २ ४७, ८

243. वि ४ २३,४ab

244. वैकारिकादहकारात्पञ्च ज्ञानेन्द्रियाण्यपि।
कर्मेन्द्रियाणि पञ्चापि तेजस्काज्जज्ञिरे पुन ॥ वि ति २ ६५

245 वैकारिकादहंकारात्सात्त्विकात्पञ्च जज्ञिरे।
ज्ञानेन्द्रियाणि पञ्चैव राजसात्तैजसात्पुन ॥
कर्मेन्द्रियाणि जातानि . पा ज्ञा ५ १३,४a

246 सुदर्शनेरित विष्णोराहकारिकमिन्द्रियम्।
मनो नाम मनूना तज्जायते चिन्तनात्मकम् ॥ अहि. ७ २०

247. मनोजातद्विरूप च तत सकल्पसाधनम् ॥ पर २ ४८cd

विष्णुसंहिता[248] - लक्ष्मीतन्त्रं[249] च कथयन्ति।

तैजसाहंकारात् कालमनसोरुत्पत्ति·, कालात् पूर्वादीनां दिशामुत्पत्तिरिति परमसंहितायामुच्यते[250]।

ज्ञानप्रसरणसमर्थानि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि पञ्च ज्ञानेन्द्रियाणि[251]।

| इन्द्रियम् | विषयः | क्रिया | देवता |
|---|---|---|---|
| श्रोत्रं | शब्दः | श्रवणं | दिक् |
| त्वक् | स्पर्श· | स्पर्शनं | विद्युत् |
| चक्षुस् | रूपं | दर्शनं | सूर्यः |
| जिह्वा | रस· | रसनं | सोमः |
| घ्राणं | गन्ध | आघ्राणनं | वसुमती[252] |

---

248 वि. ४ २४cd

249 उभयस्मात्ततश्चासीद् बुद्धिकर्मेन्द्रिय मन ॥ लक्ष्मी ५. ५१cd

250 कालश्च तैजसादेव जातस्तु यदि (कृत ?) लक्षण ।
कालाद्दिशश्च सभूता पूर्वाद्या क्रमश स्थिता ॥ पर २ ४९

251. श्रोत्र त्वक् चैव चक्षुश्च जिह्वा घ्राण च पञ्चमम्।
बुद्धीन्द्रियाणि पञ्चाहु शक्तिरेषा मदात्मिका ॥ लक्ष्मी ५. ५२

252 श्रोत्रस्य विषय शब्द श्रवण च क्रिया मता।
त्वचश्च विषय स्पर्श स्पर्शन च क्रिया मता॥
चक्षुषो विषयो रूप दर्शन च क्रिया मता।
जिह्वाया विषयो रस्यो रसन च क्रिया मता॥
घ्राणस्य विषयो गन्ध आघ्राण च क्रिया मता।
. .
. .
दिक् च विद्युत्तथा सूर्य सोमो वसुमती तथा॥
अधिदैवमिति प्रोक्तम् . . ॥ Ibid ५ ५६-८ab,५९ cd,६०a

श्रोत्रादेः वृत्तय एव श्रवणादिक्रिया भवन्ति। इमाः श्रवणादयो वृत्तय आलोचनम् इति शब्देनापि कथ्यन्ते[253]। आलोचनं नाम शब्दादिविषयधर्माणा स्फुटग्रहणं विना शब्दादिधर्मिमात्रग्रहणम्[254]। शब्दादिर्विषयः अधिभूतमिति, श्रोत्रादिपञ्चकम् अध्यात्ममिति च कथ्यते। आकाशादिभूतसापेक्षत्वात् सात्त्विकाहंकारात् श्रोत्रादीनां सृष्टिः, अत एव श्रोत्रादिपञ्चकं भौतिकमिति व्यवह्रियते[255]।

वाक्पाणिपादोपस्थापायूनि क्रियारम्भकाणि पञ्च कर्मेन्द्रियाणि[256]।

| **इन्द्रियणि** | **विषयः** | **क्रिया** | **देवता** |
|---|---|---|---|
| वाक् | शब्दः | उच्चारणं | अग्निः |
| पाणिः | आदेयम् | आदानम् | इन्द्र |
| पादः | गन्तव्यम् | गमनम् | विष्णु |
| उपस्थः | आनन्द्यम् | आनन्दः | आद्य प्रजापतिः |
| पायुः | विसृज्यम् | विसर्गः | मित्रः[257] |

253. वृत्तयो विषयेष्वस्य श्रोत्रादेः श्रवणादयः ॥
आलोचनानि कथ्यन्ते धर्मिमात्रग्रहश्च सः। Ibid ५ ५८cd, ९ab

254. कृष्ण. लक्ष्मी टि पृ. २१

255. अधिभतमिति प्रोक्तः शब्दाद्यो विषयः क्रमात्।
श्रोत्रादिपञ्चक त्वेतदध्यात्म परिकीर्तितम्।
श्रोत्रादेः सात्त्विकात्सृष्टिर्वियदादिव्यपेक्षया॥
तेन भौतिकमित्युक्त क्रमाच्छ्रोत्रादिपञ्चकम्। लक्ष्मी ५ ६० cd- २ab

256 वाक् च हस्तौ च पादौ च तथोपस्थ च पायु च।
कर्मेन्द्रियाणि पञ्चाहु शक्तिरेषा मदात्मिका॥ Ibid ५ ५३

257. वाचस्तु विषय शब्दो वचन च क्रिया मता॥
हस्तेन्द्रियस्य चादेयमादान च क्रिया मता।
पादेन्द्रियस्य गन्तव्य गमन च क्रिया मता॥
उपस्थस्य तदानन्द्यमानन्दश्च क्रिया मता।

शब्दादिर्विषयः अधिभूत इति, वागादीन्द्रियाणि अध्यात्ममित्युच्यते[258]।

मनोऽहंकारबुद्धिरूपेण अन्तःकरण त्रिविधम्। विकल्पः अभिमानः अध्यवसायश्च क्रमात् त्रिविधस्य अन्त·करणस्य वृत्तयः[259]। एतेषां संकल्प - संरम्भ - प्राणा क्रियाविधौ गुणा·। औदासीन्यच्युतिः संकल्प इति, गर्वः संरम्भ इति, प्राण प्रयत्न इति च कथ्यते[260]।

ज्ञानेन्द्रियपञ्चके कर्मेन्द्रियपञ्चके च उभयत्रापि मनः सहकारि। इदं मनः ज्ञानेन्द्रियगणैः विकल्पं तनुते। विकल्पो नाम विविधा क्लृप्तिः। तदेव विशेषणमित्युच्यते। धर्मेण धर्मिण· संबन्धश्च विकल्पः कथ्यते। द्रव्य - गुण - कर्म - सामान्य - शब्दभेदेन संबन्धरूपः विकल्पः पञ्चविधो भवति। द्रव्य संबन्धात् दण्डी इति, गुणसंबन्धात् शुक्ल इति, क्रियासंबन्धात् गच्छतीति,

---

विसृज्य विषय पायोर्विसर्गश्च क्रिया मता॥
हस्तादिक चतुष्क यत्तत्पञ्चविषयात्मकम्।
अग्निरिन्द्रश्च विष्णुश्च तथैवाद्य प्रजापति ॥
मित्रश्चेति क्रमाज्ज्ञेया अधिदेवा विचक्षणै। Ibid. ५.६२cd-६ab

258 शब्द पञ्चात्मक चैव वागादेर्विषयो हि य ॥
सोऽधिभूत इति प्रोक्तो वागाद्यध्यात्ममुच्यते। Ibid. ५. ६६cd, ७ab

259. चैत्यसकोचनी चित्तमन्त करणमीरितम्।
मनो बुद्धिरहकार इत्येतत् त्रितयं च तत्॥
विकल्पोऽध्यवसायश्चाप्यभिमानश्च वृत्तय।
मनो विकल्पयत्यर्थमहकारोऽभिमन्यते॥
अध्यवस्यति बुद्धिश्च चेतनाधिष्ठिता सदा। Ibid. ७ ३०-२ab

260 प्राणसरम्भसकल्पा गुणा एषा क्रियाविधौ।
प्राण प्रयत्न इत्युक्त सरम्भो गर्व उच्यते॥
फलस्वाम्यस्वरूपश्च गर्व सरम्भ उच्यते।
औदासीन्यच्युति प्रोक्त सकल्पो मानसो बुधै ॥ Ibid. ७. ३५,६

सामान्यसंबन्धात् पुमानिति, शब्दसंबन्धात् डित्थ इति पञ्चधा विकल्पो भवति। तत् मनः कर्मेन्द्रियगणैः संकल्पं तनुते। औदासीन्यात् च्युति. या सा संकल्प· उद्योगनामिका। संकल्प· मनसो व्यापार ।

ज्ञानेन्द्रिय - कर्मेन्द्रियगणे अहंकारेण मनसः स्थिति.। ज्ञानेन्द्रियगणे सोऽयमहंकारः अभिमानेन वर्तते। ज्ञातुः देशकालाख्यः अभिमान इत्युच्यते। अहंकारः कर्मेन्द्रियगणे संरम्भेण प्रवर्तते। संकल्पस्य पूर्वरूपः संरम्भः उच्यते।

बुद्धिः अध्यवसायेन ज्ञानेन्द्रियगणे स्थिता भवति। अध्यवसायार्थम् अवधारणं बुद्धिरित्युच्यते। अर्थानां निश्चय· अवधारणम्। बुद्धि. कर्मेन्द्रियगणे प्रयत्नेन प्रवर्तते।

विकल्पः अर्थमवलोकयति, मनः तदर्थं विकल्पयति, अहंकार· अभिमन्यते, ततः बुद्धिः अध्यवस्य क्षेत्रज्ञाय प्रयच्छति।

इत्थं मनः अहंकारः बुद्धिरित्येतत्त्रितयमन्तःकरणम्[261]।

## 3.5.2.8. तन्मात्राणि, भूतानि च

भूतादिनामकात् तामसाहंकारात् शब्दतन्मात्रं, तत. आकाशं, तस्मात्स्पर्शतन्मात्रं, ततो वायुः, तस्माद्रूपतन्मात्रं, ततस्तेज., तस्माद्रसतन्मात्रं, तस्मादापः, अद्भ्यः गन्धतन्मात्रं तस्मात्पृथिवी जायत इति पञ्चतन्मात्राणां भूतानां च उत्पत्तिं पञ्चरात्रसंहिताः प्रतिपादयन्ति[262]। इत्थं तामसाहंकारात् शब्दादीनि

261 लक्ष्मी ५. ६७cd-७७ab

262. .. . भूतादेस्तामसादथ।
शब्दतन्मात्रमभवत्तच्चाकाशमजीजनत्॥
स्पर्शतन्मात्रमाकाशात्तस्माद्वायुरजायत।
रूपमात्र ततो वायोस्तस्मादग्निरजायत॥
रसमात्रमजन्यग्नेस्तस्मादाप प्रजज्ञिरे।
गन्धतन्मात्रमद्भ्योऽपि गन्धमात्रात्तथा मही॥ पाद्म (ज्ञा) ५ १४bcd-६, वि ति २ ६६-८ab

तन्मात्राणि क्रमेण द्वारीकृत्य आकाशादिभूतपञ्चकमुत्पद्यते।

### 3.5.2.9. परमपुरुषस्य जगत्सृष्टिस्थितिसंहारकर्तृत्वम्

ईश्वराधिष्ठिताया एव प्रकृते यद्यपि जगद्रूपेण परिणाम· अथापि अत्र प्रकृतेः स्वातन्त्र्यं नास्तीति कृत्वा ईश्वरस्यैव जगज्जन्मस्थितिलयकर्तृत्वं पञ्चरात्रसंहितासु कथ्यते[263]। परस्य पुरुषस्य नियोगात् प्रकृतिः लोकानुत्पादयति, अन्ते संहारयति च। अचेतनाया· प्रकृते· परमपुरुषप्रेरणां विना सृष्टिसंहारकर्तृत्वं न संभवति। अतः परमपुरुष एव सर्गसंहारौ करोति[264]।

### 3.5.2.10. प्रकृतिपरमपुरुषयोः संबन्धः

प्रकृतिपरमपुरुषयोः व्याप्यव्यापकरूपः संबन्धः। आकाशे शब्द इव, पयसि स्नेह इव, सलिले रस इव परमात्मा अव्याकृतं (प्रकृतिं) व्याप्य स्थितः। व्यापकं रूपं परमपुरुषः विषयी इति, व्याप्यं रूपम् अव्याकृतं विषय इति च कथ्यते। सदसतोरिव व्याप्यव्यापकयोः प्रकृति - परमपुरुषयोः स्वरूपं पृथग्दर्शयितुं न शक्यते[265]। क्षेत्रं नाम प्रकृतिः तज्ज्ञः क्षेत्रज्ञः ईश्वर.। उभयं

263 सस्थानिना समुत्पत्या जगतो जन्म यन्मतम्।
तदीशकृतमन्योऽल प्रकृतेर्न हि चोदने॥
तस्मादीशकृत विश्व तद्रूढं तन्मय तथा।
तत्पालित तदर्थ च तदीय चेति गृह्यताम्॥ वि. ३ ८५,६

264 परस्य पुरुषस्यैव नियोगात्प्रकृति सदा।
उत्पादयति लोकांश्च सहरत्यपि चान्तत॥
अचेतना तु प्रकृतिर्नान्यथा सप्रसूयते।
तेनेमौ सर्गसहारौ करोति पुरुष पर॥ पर २ २६,७

265. व्याप्तिरूपेण सबन्ध तस्याश्च पुरुषस्य च।
स ह्यनादिरनन्तश्च परमार्थेन तिष्ठति॥
यथाकाशमिद सर्व प्राप्य शब्दो व्यवस्थित।
तथैवाव्याकृत प्राप्य परमात्मा व्यवस्थित॥
यथा वा पयसि स्नेह यथा च सलिले रस।
गमने तद्वदत्रापि व्याप्य व्यापकतेष्यते॥
तत्र यद्व्यापक रूपं पर स विषयी पुमान्।

चेदमत्यन्तमभिन्नमिव तिष्ठति।

### 3.5.2.11. प्रकृतिपुरुषयोः साधर्म्यवैधर्म्ये

प्रकृतिपुरुषौ स्वतः असक्तौ सक्ताविव स्थितौ महद्भ्यः महाकारौ लिङ्गप्राप्तौ नित्यौ अलिङ्गौ च इति प्रकृतिपुरुषयोः साधर्म्यम्।

प्रकृतिस्त्रिगुणा नित्यं परिणामिनी अविवेका अशुद्धा सर्वेषां जीवानां समानविषया अचेतना सुखदुःखमोहात्मिका च। पुरुषस्तु मध्यस्थः नित्य क्रियावानपि निर्विकारः साक्षी द्रष्टा शुद्धः अनन्तश्च इति प्रकृतिपुरुषयोर्वैधर्म्यम्[266] पञ्चरात्रसंहितासु निर्दिश्यते।

सत्त्वरजस्तमोगुणैस्त्रिभिः स्थावरजङ्गमात्मकं जगत् संबन्धेन वियोगेन विविधं वैचित्र्यं प्राप्नोति[267]।

---

भवत्यव्याकृत व्याप्य परस्य विषयोऽपरम्॥
यथा सतोऽसतो नान्या शक्या दर्शयितु पृथक्।
तथा व्यापकता नान्या सर्वस्मात् व्याप्य तत्स्मृता॥ पर २ १९-२३
क्षेत्राख्या प्रकृतिर्ज्ञेया तद्वित् क्षेत्रज्ञ ईश्वर।
उभय चेदमत्यन्तमभिन्नमिव तिष्ठति॥ वि. ४.२

266 इमौ स्वरसतोऽसक्तौ सक्तात्मानाविव स्थितौ।
प्रकृति पुरुषश्चैव महद्भ्यश्च महत्तरौ॥
लिङ्गग्राह्यावुभौ नित्यावलिङ्गौ चाप्युभावपि।
साधर्म्यमेवमाद्येवमनयोरुन्नयेद्बुध॥
वैधर्म्यमनयोः शक्र कथ्यमान निबोध मे।
प्रकृतिस्त्रिगुणा नित्य सतत परिणामिनी॥
अविवेकाप्यशुद्धा च सर्वजीवसमा सदा।
विषयोऽचेतना चैव सुखदु खविमोहिनी॥
मध्यस्थ. पुरुषो नित्य क्रियावानप्यविह्वल।
साक्षी दृशिस्तथा द्रष्टा शुद्धोऽनन्तो गुणात्मक॥
वैधर्म्यमनयोरेतत् . । लक्ष्मी १६ १५ - २०a

267 एभिरेव गुणैरेत जगत् स्थावरजङ्गमम्।
वैचित्र्य विविध प्राप्त ससर्गव्यतिरेकत.॥ पर. २ ४०

जीवप्रकृत्योः संयोग· सृष्टे· कारणमिति पञ्चरात्रागमो मन्यते[268]।

### 3.5.2.12. प्रधानस्य महदादीनां च उत्पाद्योत्पादकत्वम्

प्रधानं महदादयश्च जडत्वेन परिगण्यन्ते। जडस्य प्रधानस्य जडैः महदादिभिः सह उत्पाद्योत्पादकभाव· कथं नाम संगच्छत इति चेत् चेतनसंसर्गात् जडस्य प्रधानस्य उत्पादकत्वं जडानां महदादीनामुत्पाद्यत्वं च पाञ्चरात्रिकैरङ्गीक्रियते[269]।

### 3.5.2.13. ब्रह्मादिसृष्टिः

वटपत्रशायिनः नाभेः हिरण्मयमण्डमजायत। तच्चाण्डं शुद्धं पञ्चभूतात्मकम्। तस्य मध्ये पद्मनाभः चतुर्मुखमसृजत। ब्रह्मा च सनन्दादीन् सृष्ट्यर्थं ससर्ज। सृष्टिकार्ये अनासक्तेभ्यः तेभ्यः क्रुद्धाद्ब्रह्मणः सकाशात् रुद्रः समुत्पन्नः। स च रुद्र· आत्मनो देहं नरनारीरूपेण विभज्य अर्धनारीपुरुषः संजात। तस्मात् अर्धनारीपुरुषात् चतुर्भुजाः त्रिणेत्राः शूलपाणयः कोटिसंख्यका रुद्रा जाताः। तेषु एकादशरुद्रा· प्रधानाः। सृष्ट्यर्थं कृतरुद्रसृष्टिं निष्फलं समालोच्य ब्रह्मा मरीच्यादीन् मनसा ससर्ज। ते च मरीच्यादय· स्थावरजङ्गमात्मकस्य सृष्टिमकुर्वन् इति ब्रह्मादिकर्तृकसृष्टिः पञ्चरात्रसंहितासु वर्ण्यते[270]।

---

268 जीवप्रकृतिसयोग सृष्टे सर्वत्र कारणम्॥ वि. ति २. १२२cd

269 बीज ह्यचेतन यद्वत्तथा व्रीहिकणो द्विज।
अन्येषूत्पादक दृष्ट तत्त्व तत्त्वे तथैव च।
गुणसाम्यस्वरूपस्य रागादेरास्पदस्य च।
सतान एको ह्येकस्य चेतनाचेतनस्य च॥ ज ३ ११,२

270 ब्रह्मण सृष्टिरधुना वक्ष्यते द्विजसत्तम।
नारायणोऽसृजत्तोय तत्रैवासीन्महार्णव ॥
अनिरुद्धाशजा दुर्गा मायारूपा सुमोहिनी।
न्याग्रोधमसृजत्तस्मिन् मायारूपे महाद्रुमे।
अनिरुद्धाशज श्रीमान् पद्मनाभ पुरातन ।
सहृत्य लोकान् पुरुष पर्णपर्यङ्कमेयिवान्॥
तत्र पुस शयानस्य नागपर्यङ्कभूषिते।

## 3.6. बन्धः तद्धेतुश्च

अचेतने चेतनबुद्ध्या संसरन् जीवः बद्धो भवति इति[271], फलकामनया विहितं वैदिकं कर्म कुर्वन् बध्यते इति[272], अविद्यावशंगत. शुभाशुभं कर्म कृत्वा

---

हिरण्मय पद्मगर्भ नाभेरण्डमजायत ॥
तदण्डं पञ्चभूतात्मभूत शुद्धमतर्कितम् ।
अण्डस्य वर्धमानस्य मध्ये पद्मं सितप्रभम् ॥
सहस्रदलपर्यन्तमन्त केसरमण्डितम् ।
मध्ये कर्णिकया युक्तमद्भुत सृष्टिकारणम् ॥
स्रष्टारमसृजत्तस्मिन् पद्मनाभश्चतुर्मुखम् ।

. . . . . .

सनन्दादीनसृजत्सृष्ट्यर्थ पद्मभू स्वयम् ॥
स्रष्टु मनो न दधिरे ते च स्वायम्भुवास्तदा ।
सर्वे ते योगिनो जाता वीतरागा विमत्सरा ॥
तेष्वेव निरपेक्षेषु लोकसृष्टौ महात्मसु ।
ब्रह्मणोऽभून्महान् क्रोधस्त्रैलोक्यदहनक्षम ॥
भ्रुकुटीकुटिलात्तस्य ललाटात्क्रोधदीपितात् ।
समुत्पन्नस्तदा रुद्रो युगान्ताग्निसमप्रभ ॥
अर्धनारीनरवपुर्महाकाय प्रतापवान् ।
संविभज्यात्मनो देहं नरं नारीं च निर्ममे ॥
मिथुनाज्जज्ञिरे तस्माद्रुद्राणा कोटयस्तथा ।
सर्वे चतुर्भुजा क्रूरा त्रिणेत्रा शूलपाणय ॥
तेषु प्रधाना विप्रेन्द्र रुद्रा एकादश स्मृता ।
रुद्रसृष्टिमपि ब्रह्मा व्यर्थमालोक्य लोककृत् ॥
मरीच्यादीन् षडपरान् मनसा निर्ममे पुन ।
तैरेतदखिल सृष्टं त्रैलोक्य सचराचरम् ॥ पाद्म. (ज्ञा) ४.१-७ab,८cd-१५, विश्वा. ५ ३ - १९

271. निर्विकारोऽथ, रज्येत मायाभोगे गुणात्मके ।
सवासनो वासनाभिरविकारश्च बध्यते । ज ३ २७

272 फलकामनया कर्म विहित वैदिक भजन् ।
बध्यते . . . . . . ॥ पाद्म (ज्ञा) ४ १४ abc

जीवप्रकृत्योः संयोगः सृष्टेः कारणमिति पञ्चरात्रागमो मन्यते[268]।

### 3.5.2.12. प्रधानस्य महदादीनां च उत्पाद्योत्पादकत्वम्

प्रधानं महदादयश्च जडत्वेन परिगण्यन्ते। जडस्य प्रधानस्य जडैः महदादिभिः सह उत्पाद्योत्पादकभावः कथं नाम संगच्छत इति चेत् चेतनसंसर्गात् जडस्य प्रधानस्य उत्पादकत्वं जडानां महदादीनामुत्पाद्यत्वं च पाञ्चरात्रिकैरङ्गीक्रियते[269]।

### 3.5.2.13. ब्रह्मादिसृष्टिः

वटपत्रशायिनः नाभेः हिरण्मयमण्डमजायत। तच्चाण्डं शुद्धं पञ्चभूतात्मकम्। तस्य मध्ये पद्मनाभः चतुर्मुखमसृजत। ब्रह्मा च सनन्दादीन् सृष्ट्यर्थं ससर्ज। सृष्टिकार्ये अनासक्तेभ्यः तेभ्यः क्रुद्धाद्ब्रह्मणः सकाशात् रुद्रः समुत्पन्नः। स च रुद्रः आत्मनो देहं नरनारीरूपेण विभज्य अर्धनारीपुरुषः संजातः। तस्मात् अर्धनारीपुरुषात् चतुर्भुजाः त्रिणेत्राः शूलपाणयः कोटिसंख्यका रुद्रा जाताः। तेषु एकादशरुद्राः प्रधानाः। सृष्ट्यर्थं कृतरुद्रसृष्टिं निष्फलं समालोच्य ब्रह्मा मरीच्यादीन् मनसा ससर्ज। ते च मरीच्यादयः स्थावरजङ्गमात्मकस्य सृष्टिमकुर्वन् इति ब्रह्मादिकर्तृकसृष्टिः पञ्चरात्रसंहितासु वर्ण्यते[270]।

---

268. जीवप्रकृतिसयोग सृष्टे सर्वत्र कारणम्॥ वि. ति. २. १२२cd

269. बीज ह्यचेतन यद्वत्तथा व्रीहिकणो द्विज।
अन्येषूत्पादक दृष्ट तत्त्व तत्त्वे तथैव च।
गुणसाम्यस्वरूपस्य रागादेरास्पदस्य च।
सतान एको ह्येकस्य चेतनाचेतनस्य च॥ ज. ३.११,२

270. ब्रह्मण सृष्टिरधुना वक्ष्यते द्विजसत्तम।
नारायणोऽसृजत्तोय तत्रैवासीन्महार्णव ॥
अनिरुद्धाशजा दुर्गा मायारूपा सुमोहिनी।
न्याग्रोधमसृजत्तस्मिन् मायारूपे महाद्रुमे।
अनिरुद्धाशज श्रीमान् पद्मनाभ पुरातन ।
सहृत्य लोकान् पुरुष पर्णपर्यङ्कमेयिवान्॥
तत्र पुस शयानस्य नागपर्यङ्कभूषिते।

## 3.6. बन्धः तद्धेतुश्च

अचेतने चेतनबुद्ध्या संसरन् जीवः बद्धो भवति इति[271], फलकामनया विहितं वैदिकं कर्म कुर्वन् बध्यते इति[272], अविद्यावशंगतः शुभाशुभं कर्म कृत्वा

---

हिरण्मय पद्मगर्भं नाभेरण्डमजायत ॥
तदण्डं पञ्चभूतात्मभूत शुद्धमतर्कितम् ।
अण्डस्य वर्धमानस्य मध्ये पद्म सितप्रभम् ॥
सहस्रदलपर्यन्तमन्त केसरमण्डितम् ।
मध्ये कर्णिकया युक्तमद्भुतं सृष्टिकारणम् ॥
स्रष्टारमसृजत्तस्मिन् पद्मनाभश्चतुर्मुखम् ।
. . . . . .
. . . . . . .
सनन्दादीनसृजत्सृष्ट्यर्थं पद्मभू स्वयम् ॥
स्रष्टु मनो न दधिरे ते च स्वायम्भुवास्तदा ।
सर्वे ते योगिनो जाता वीतरागा विमत्सरा ॥
तेष्वेव निरपेक्षेषु लोकसृष्टौ महात्मसु ।
ब्रह्मणोऽभून्महान् क्रोधस्त्रैलोक्यदहनक्षम ॥
भ्रुकुटीकुटिलात्तस्य ललाटात्क्रोधदीपितात् ।
समुत्पन्नस्तदा रुद्रो युगान्ताग्निसमप्रभ ॥
अर्धनारीनरवपुर्महाकाय प्रतापवान् ।
सविभज्यात्मनो देह नर नारीं च निर्ममे ॥
मिथुनाज्जज्ञिरे तस्माद्रुद्राणा कोटयस्तथा ।
सर्वे चतुर्भुजा क्रूरा त्रिणेत्रा शूलपाणय ॥
तेषु प्रधाना विप्रेन्द्र रुद्रा एकादश स्मृता ।
रुद्रसृष्टिमपि ब्रह्मा व्यर्थमालोक्य लोककृत् ॥
मरीच्यादीन् षडपरान् मनसा निर्ममे पुन ।
तैरेतदखिल सृष्ट त्रैलोक्य सचराचरम् ॥ पाद्म (ज्ञा) ४ १-७ab, ८cd-१५, विश्वा ५ ३ - १९

271 निर्विकारोऽथ, रज्येत मायाभोगे गुणात्मके ।
सवासनो वासनाभिरविकारश्च बध्यते । ज ३. २७

272. फलकामनया कर्म विहित वैदिक भजन् ।
बध्यते . . . . . ॥ पाद्म (ज्ञा) ४ १४ abc

तत्तत्कर्मप्रवाहजं भोगस्थानं प्राप्य सुखं दुःख वा पुरुष· अनुभवति, अयमेव संसारः अथवा बन्ध इति[273] च पञ्चरात्रसंहितासु उपवर्ण्यते।

जयाख्यसंहितायाम्[274] अविवेक एव जीवस्य प्रकृतेश्च संबन्धे कारणमिति प्रतिपाद्यते।

विष्णुतिलके तु पाञ्चभौतिकशरीरसंबन्धः जीवस्य बन्धहेतुरिति, ईश्वरमाया पाञ्चभौतिकशरीरसंबन्धे कारणमिति च उपपाद्यते। तथा हि - पाञ्चभौतिकशरीरस्य वृद्धौ ह्रासे च अन्नपानादिसंबन्धः तदभावश्च कारणम्। भगवान् मायाद्वारा शरीरं जीवानां संयोजयति। मायायामेकरूपतया लीनं पाञ्चभौतिकं शरीरं यदा विकासं प्राप्नोति तदा शरीरसंबन्धः। अतः भगवदधीन एव सर्वेषां विचित्रशरीरयोगः इति वर्ण्यते[275]।

शुभाशुभकर्मानुष्ठाने मायाया· कारणीभूतत्वं, तद्द्वारा मायाया· बन्धहेतुत्वं, मायाऽविद्ययोः एकत्वम्, अविद्यायाः गुणत्रयवत्वं च विष्णुतिलके प्रतिपाद्यते। तथा हि -

पुरुषाः मायावशंगताः शरीरं प्राप्य शुभाशुभं कर्म कृत्वा तत्तत्कर्मप्रवाहजं

---

273 शुभाशुभ कर्म कृत्वा मायावशगता ।
भोगायतनमास्थाय तत्तत्कर्मप्रवाहजम्॥ Ibid. ७.९

274 ज ३.२७

275. पञ्चभूतमयै रन्नै पृथिव्यादिवपुर्गतम्।
वर्धते रसभागैस्तैर्नान्यथा वृद्धिसभव ॥
अन्नपानादिरहित प्राणी यदि मुनीश्वरा ।
न वर्धते तस्य वपु क्षय याति न सशय ॥

. .

. . .

मायास्ति वासुदेवस्य कारण वृद्धिमौनयो ।
भूतानि योजयेन्माया जन्तुजातिविभागत ॥
पुमास विग्रहे तस्मिन् तत प्राणी सचेष्टित । वि ति १.४४,५, ५०,१ab

सुखं दुःखं वा अनुभवन्ति। अयमेव संसारः। तस्य च कर्मैव कारणम्। कर्मणश्च अविद्या कारणम्। पुरुषः अविद्याविवश· सन् कर्म कुरुते। अविद्याशब्देन सत्त्वरजस्तमः समुदायः कथ्यते। सत्त्वरजस्तमोभिर्बद्धः जन्तु कर्म करोति। मायायाः निद्रा, कर्म, मोहिनीति त्रिविधा मूर्तिर्भवति। तिस्रोऽपि मूर्तयः सत्त्वादिगुणरूपाः। ताभिः पुमान् संसरते इति च विष्णुतिलकसंहितायां बन्धहेतुरुपपाद्यते[276]।

पाद्मसंहितायां पुनः कर्मैव बन्धहेतु· अर्थात् पापं पुण्यं च स्वफलदानेन बन्धहेतुर्भवतीति उच्यते। तथा हि - फलकामनया वेदविहितं कर्म कुर्वन् बध्यते। यस्य इन्द्रियनिमित्तकं वैषयिकं ज्ञानं स बध्यते। अविद्यावशंगता· पुरुषा· शुभाशुभं कर्म कृत्वा तत्तत्मकर्मप्रवाहजं भोगस्थानं प्राप्य सुखं दुःखं वा अनुभवन्ति। अयं सुखदुःखानुभव एव संसार। तस्य च कारणं साक्षात् कर्मैव इति कर्मणो बन्धहेतुत्वं पाद्मसंहितायामुपपाद्यते[277]।

---

276. शुभाशुभात्मक कर्म कृत्वा मायावशंगता।
भोगायतनमासाद्य तत्तत्कर्मप्रवाहजम्॥
दु खं सुख वा पुरुषा भुञ्जते ये जितेन्द्रियाः।
ससृति. सा चतुर्वक्त्र तस्या कर्मैव कारणम्।
करोति कर्म चाविद्याविवश पुरुष स्वयम्।
.. . .
. .
अविद्याविवश कर्म कुरुते पुरुष· स्वयम्॥
सत्त्व रजस्तमश्चेति तिस्रो विद्याश्चतुर्मुख।
ताभिर्नि
गुणत्रयमयी विद्या
मायायास्त्रिविधा मूर्तिर्निद्रा कर्माथ मोहिनी॥
सत्त्वादिगुणरूपास्तास्ताभि ससरते पुमान्। वि ति २ १.१.१-३ ab, १.१.४cd-८ab

277. फलकामनया कर्म विहित वैदिक भजन्।
बध्यते
ज्ञान वैषयिक यस्य चक्षुरादिनिबन्धनम्।

पाद्मसंहितायां बन्धहेतु· एतदतिरिक्ततया प्रकारान्तरेणापि निर्दिश्यते। तथा हि-

पुरुषस्य गुणत्रयवशात् बन्धः, प्रकृतेः संबन्धाच्च बन्धो भवति। सत्त्वादिभिः व्यस्तै· समस्तैश्च त्रिभिर्गुणै· पुरुष· बध्यते। एवं गुणत्रयनिमित्तकक्रियाक्रमवशात् पुरुष· संसारे गच्छति। त्रिगुणाख्यप्रकृतिसंबन्धात् पुरुष· बध्यत इति यावत्। प्रकृतिश्च सततं पुरुषस्य निद्रां प्रसूते इति पाद्मसंहितायामुपवर्ण्यते[278]। गुणत्रयसाम्यावस्था प्रकृति, तस्याः संबन्धात् पुरुषः बध्यते इति सांख्यमत्राभिव्यज्यते।

अज्ञानलेशानुवृत्या सुषुप्त्यवस्थायामपि बन्ध इति यद्वेदान्ततत्त्वं तत् पाद्मसंहितायां निद्रालस्य विवशस्य स्वस्वरूपं विस्मरतश्च पुरुषस्य बन्धो

---

बध्यते . ॥

.

पुण्यपापनिमित्ते य सुखदु खे निषेवते।
सासारी . . . ॥ पाद्म (ज्ञा) ४ १४abc, ५abc, १०abc

278 त्रिभिरेव गुणैर्व्यस्तै समस्तै पूर्वमीरितै ।
सत्त्वादिभि क्रिया चापि त्रिविधा सप्रवर्तते।
तया ससारमृच्छन्ति पुरुषा पूर्ववृत्तय ।

. . .

पुरुषस्य गुणा एते देहधर्मानुवर्तिन ।
विषयस्य वशादेते भवन्ति न भवन्ति च॥

. . . . .

त्रिगुणा प्रकृतिर्ब्रह्मन् विषयो देहिन स्मृत ।
तद्योगाद्बध्यते जन्तुस्तदयोगाद्विमुच्यते॥
जानाति पुरुषो नित्य प्रकृति त्रिगुणात्मिकाम्।
सा ऽत्र प्रसूते सतत निद्रालस्य पृथग्विधम्॥
स्वरूप विस्मरत्येष निद्रया विवश स्वयम्।
स बन्ध इष्यते पुसाम् ॥ पाद्म (ज्ञा) ४ १९, २०ab, २२, २४-६

भवतीति प्रकारान्तरेण कथ्यते।

परमसंहितायां त्रिगुणात्मिकायाः प्रकृते· संबन्धात् जीवस्य बन्ध इत्युच्यते। तथा हि -

त्रिगुणा प्रकृतिः विषय·, तत्संबन्धात् पुरुषः बध्यते। पुरुष नित्यं प्रकृतिस्थितं गुणत्रयं जानाति। प्रकृतिश्च अस्य पुरुषस्य विविधा निद्रां प्रसूते। निद्रां सुरूपां कान्तामिव भजन् पुरुष· स्वस्वरूपं विस्मरति[279]।

कर्मवशात् मायामग्नः पुमान् बध्यते। यावत् माया न हीयते तावत् पुंम संसार इति च परमसंहितायां कथ्यते[280]।

लक्ष्मीतन्त्रे तु कर्म अविद्या वा बन्धहेतुरिति प्रतिपाद्यते। तथा हि -

देवाद्याः स्थावरान्ताः नानास्थानजुष· जीवा. स्वस्वकर्मभि· संसरन्ति इति, देव्या रूपसंकोचः बन्धहेतु· स च अविद्यया भवति इति च कथनात् कर्म अविद्या वा बन्धहेतुरिति[281] कथ्यते।

---

279. प्रकृतिस्त्रिगुणा ज्ञेया देहिनो विषयस्थिता।
तया युक्तास्तु बध्यन्ते मुच्यन्ते रहितास्तया॥
जानाति पुरुषो नित्य त्रिगुणा प्रकृतिस्थिताम्।
सा च प्रसूते सतत निद्रामस्य पृथग्विधाम्॥
कान्तामेव भजन्निद्रां स्वतन्त्रमिव संस्थिताम्।
सुरुचं विस्मरत्येष सबन्ध पुस इष्यते॥ पर १.७६-८

280. मायैव कारण तस्य पुरस्ताद्विहिता मया।
भूय कर्मवशादेव मायामग्नेव तिष्ठति॥
. .. .. ...
यावदेव न मायेय मत्प्रसादेन हीयते।
तावत् पुसस्तु ससार ... ..॥ Ibid १ ८०,८२ abc

281 ... . देवाद्या स्थावरान्तिमा॥
नानास्थानजुषो जीवा कर्मभि संसरन्ति हि। लक्ष्मी. ६ २९, ३० ab
अनौपाधिकमच्छेद्य जीवरूपं तु चिन्मयम्।
एवंरूपमपि त्वेतच्छाद्यतेऽनाद्यविद्यया॥ Ibid १३ ३८

अहिर्बुध्न्यसंहितायां तु भगवत. निग्रहाख्यः संकल्प· बन्धहेतुर्भवति। भगवतः संकल्प· निग्रहरूपतां यदा प्राप्नोति तदा पुमांसं तिरोभावयति। अत एव बन्धकाले विद्यमानस्य जीवस्य अणुत्वम्, अकिंचित्करत्वम्, अज्ञत्वं च जायते। निग्रहशक्तेः तिरोधानपरम्परया संचितैः कर्मभिरेव सृष्ट्यादयो भवन्ति। अर्थात् अत्र अविद्यादिक्लेशै· क्लेशितः जीवः इष्टानिष्टप्राप्तिपरिहाराय तत्तदुचितं कर्म कुर्वाणः संसरति। अयं बन्धः अनादिः, तद्धेतुरप्यनादिरिति परिगण्यते।

भगवतः संकल्पः सृष्टिस्थितिप्रलयनिग्रहानुग्रहरूपेण पञ्चधा विजृम्भते। निग्रहाख्या या तिरोधानकरीशक्तिः तया जीवाख्यं पुमांसं भगवान् तिरोभावयति। तेन जीवस्य आकारः ऐश्वर्यं विज्ञानं च तिरोहितं भवति। आकारस्य तिरोधानात् पुंसः अणुत्वं भवति। ऐश्वर्यस्य तिरोधानात् अकिंचित्करत्वं जायते। विज्ञानस्य तिरोधानात् अज्ञत्वं भवति। एवं च विष्णुसंकल्परूपेण शक्त्या तिरोहितः पुमान् अणुः, किंचित्करः, किंचिज्ज्ञश्च कथ्यते। अणुत्वं, किंचित्करत्वं, किंचिज्ज्ञत्वं त्रितयं मलत्रयं बन्धहेतुरिति च कथ्यते। एवं बद्धो जीवः अविद्या - अस्मित - रागाद्यैः मलमभिवर्धयति। एवमविद्यादिभि· क्लेशै· क्लेशितो जीवः इष्टार्थप्राप्तये अनिष्टविघाताय च तत्तत्कर्म करोति। तादृशकर्मपरिपाकमहिम्ना जीव· जन्म - आयु. - भोगं - सुखादिवासनाश्च क्रमशः प्राप्नोति । एषा निग्रहशक्तेः तिरोधानपरम्परा संचितैः कर्मभिरेव सृष्ट्यादीन् प्रवर्तयति। अयं बन्ध. अनादिः बन्धहेतुश्च अनादिरिति[282]।

282 सकल्पो नाम यस्तस्य सुदर्शनसमाह्वय ।
सत्यप्यनन्तरूपत्वे पञ्चधा सा विजृम्भते ॥
सृष्टिस्थित्यन्तकारेण निग्रहानुग्रहात्मना।
तिरोधानकरी शक्ति. सा निग्रहसमाह्वया ॥
पुमास जीवसंज्ञ सा तिरोभावयति स्वयम्।
आकारैश्वर्यविज्ञानतिरोभावनकर्मणा ॥

. . .

. . . . .

आकारस्य तिरोधानादणुत्व पुस इष्यते।

इत्थं पञ्चरात्रसहितासु बन्धहेतुत्वेन वर्णितेषु कर्मप्रभृतिषु समीक्षितेषु सत्सु सर्वत्र अविद्याया एव परम्परया बन्धहेतुत्व सिध्यति। अहिर्बुध्न्यसंहितायां तु निग्रहाख्यस्य भगवत्संकल्पस्य बन्धहेतुत्वं यद्यपि विलक्षणतया अभिधीयते तथापि तिरोधायकस्य निग्रहाख्यस्य भगवत्संकल्पस्य अविद्याशब्द पर्यायवाचकः[283] इति अविद्या एव बन्धहेतु· पञ्चरात्रनये इति सिद्धम्।

## 3.7. मोक्षः तदुपायश्च

अप्राकृतदेशविशेषप्राप्तिपूर्वकपरिपूर्णब्रह्मानन्दानुभव एव मोक्ष

---

ऐश्वर्यस्य तिरोभावादकिंचित्करता स्मृता॥
पुसो विज्ञानसकोचादज्ञत्व समुदाहृतम्।
तिरोहित पुमाञ्च्छक्त्या विष्णुसकल्परूपया॥
अणु किंचित्करश्चेति किंचिज्ज्ञश्चेति कथ्यते।
मलत्रयमिदं प्रोक्त बन्धत्रयमिद बुधै ॥
तिरोभावनशक्त्यैव वैष्णव्या बन्धमेयुष ।
अविद्याऽस्मित्वरागाद्या मल समुपचिन्वते॥
क्लिश्यद्भि क्लेशित क्लेशैरविद्यादिभिरीदृशै ।
नुन्न· प्रेप्साजिहासाभ्यामागमाननुसंपतन्॥
इष्टार्थप्राप्तयेऽनिष्टविघाताय च लालस ।
कर्म तत्कुरुते कामी शुभाशुभफलोदयम्॥
तत कर्मविपाकस्थ· शुभाशुभविमिश्रितान्।
जात्यायुरनुबन्धान्स प्राप्नोति विधिचोदित ।
सुखादिवासनास्तास्ता संचिनोति शनै शनै ।
एषा निग्रहशक्तेस्तु तिरोधानपरपरा॥
अशौ यौ कालशक्त्याख्यौ भूते समनुवर्तितौ।
ताभ्या पुसस्तिरोभावं तनुते निग्रहात्मिका॥
बन्धस्य त्वनया शक्त्या तिस्र सृष्ट्यादिशक्तय ।
सचितै सप्रवर्तन्ते तैस्तै कर्मभिरूर्जितै· ॥
बन्धोऽनादिरय प्रोक्तो बन्धहेतुश्च नादिमान्। अहि १८ १८-६ १८-२८ab

283. मायाऽविद्या महामोहो महातामिस्रमित्यपि।
तमो बन्धोऽथ हृद्ग्रन्थिरिति पर्यायवाचका ॥ Ibid. १४ १७

पञ्चरात्रसमयसंमत.[284] । अप्राकृदेशविशेषश्च अहिर्बुध्न्यसंहितायां लक्ष्मीतन्त्रे च विशेषेणोपवर्णितः । सुदर्शनाख्यात् संकल्पात् ज्ञानानन्दमयी विस्तृता उज्ज्वला प्रभा देशभावं प्राप्य परमं व्योम इत्याख्यां धत्ते । इदं प्रकृतिमण्डलमतिक्रम्य ऊर्ध्वदेशे व्यापकत्वादप्राकृतो देश इति, निरतिशयानुकूलत्वात् परमपदमिति, शाश्वतिकत्वाद्वैकुण्ठ इति, कोटिसूर्यप्रकाशमयत्वाद् ज्ञानमय इति, भगवतः ज्ञानशक्त्यादीनां षड्गुणानां प्रकाशकत्वत् षाड्गुण्यमय इति, ईश्वरस्य नित्यमुक्तानां च शरीरस्य कारणभूतत्वात् दिव्यमङ्गलमिति, भोग्यभोगोपकरणभोगस्थानमण्डपप्राकारगोपुरपुष्करभूषणायुधसमलंकृतानेक-भगवल्लोकरूपत्वादानन्दमय इति व्यपदिश्यते । निर्धूतपापाः तत्त्वज्ञाः तत्स्थानं प्राप्य मुक्ता भवन्ति । एते मुक्ता· पुष्करेक्षणं षाड्गुण्यविग्रहं श्रिया युतं स्वसंकल्पसाधितसमस्तदेहदैहिकविस्तरं सर्वस्य जगत· ईश्वरं सर्वाधारभूतं स्वयमाधारान्तररहितम् अनामयं नारायणाख्यं पुरुषं सदा पश्यन्ति । संसाराध्वनः पारभूतं तद्वैष्णवं पदं प्राप्य पुनः कालकल्लोलमिमं संसाराध्वानं न प्राप्नुवन्ति । विष्णुभक्ता· संसारपदमाश्रिता· यादृशं रूपमुपासते परमं व्योम प्राप्य तत्र स्थितास्ते तादृशं रूपं साक्षात्कुर्वन्ति । सुचिरं कालं विहरणं कृत्वा ततस्ते दिव्यं षाड्गण्यं वैष्णवं यश प्राप्नुवन्ति[285] ।

---

284 कृष्ण लक्ष्मी उपो पृ १६

285 सुदर्शनाख्यात्सकल्पात्तस्या एव प्रभोज्ज्वला ॥
ज्ञानानन्दमयी स्त्याना देशभावं व्रजत्युत ।
स देश परम व्योम निर्मल पुरुषात्परम् ॥
नि सीमसुखसतानमनवद्यमनाकुलम् ।
तत्रानन्दमया भोगा लोकाश्चानन्दलक्ष्णा ॥
ज्ञानानन्दमया देहा मुक्ताना भावितात्मनाम् ।
सदा पश्यन्ति ते देवा पुरुष पुष्करेक्षणम् ॥
षाड्गुण्यविग्रह देव तादृश्या च श्रिया युतम् ।
सकल्पसाधिताशेषदेहदैहिकविस्तरम् ॥
ईशानमस्य सर्वस्य जगतस्तस्थुषस्पतिम् ।
सर्वावासमनावास नारायणमनामयम् ॥

अनादिवासनायुक्तस्य जीवस्य सर्वकर्मनिवृत्या स्वाभाविकज्ञान-विकासलाभेन ब्रह्मसमापत्तिरेव मोक्ष इति स च मोक्षः अपुनर्भवरूप इति च मोक्षस्वरूपं जयाख्यसंहितायामुपवर्ण्यते[286]। अपुनर्भवरूपमोक्ष· अहिर्बुध्न्यसंहितायामपि वर्ण्यते[287]।

तथा च परिपूर्णब्रह्मानुभव एव मोक्ष· पञ्चरात्राभिमत इति पञ्चरात्रसंहितानां परिशीलनेनावगम्यते।

जयाख्यसंहिता चेतनाचेतनविवेकेन मोक्ष इति निर्दिशन्ती चेतनाचेतनविवेकं मोक्षोपायमाह। संसारवासनापनोदनार्थमस्य मोक्षः अस्त्विति

---

तत्पद प्राप्य तत्त्वज्ञा मुच्यन्ते वीतकल्मषा ।
त्रसरेणुप्रमाणास्ते रश्मिकोटिविभूषिता ॥
आविर्भावतिरोभावधर्मभेदविवर्जिता ।
परमं तेऽध्वन पारं वैष्णवं पदमाश्रिता· ॥
विशन्ति नेममध्वान कालकल्लोलसकुलम्।
भक्तास्ते यादृशे रूपे ससारपदमाश्रिता ॥
तादृश ते समीक्षन्ते परमव्योमवासिन ।
विहृत्य सुचिर काल कोट्योघप्रतिसचरम्॥
ततो विशन्ति ते दिव्यं षाड्गुण्य वैष्णव यश । अहि ६ २१cd-३१ab

प्राप्यते परम धाम यतो नावर्तते पुन । Ibid. ३७ २६ab
नभस्तु परम व्योम परमाकाशशब्दितम्।
यत्र देवो मया सार्ध विभज्यात्मनमात्मना॥
क्रीडते रमया विष्णु परमात्मा सनातन ।
षाड्गुण्यस्य समुन्मेष स देश परमाम्बरम्॥ लक्ष्मी ७ ९.१०
तयोर्नौ परम व्योम निर्दु ख पदमुत्तमम्।
षाड्गुण्यप्रसरो दिव्य स्वाच्छन्द्याद् देशता गत ॥ Ibid १७ ९

286. अनादिवासनायुक्तो यो जीव इति कथ्यते॥
तस्य ब्रह्मसमापत्तिर्याऽपुनर्भवता च सा। ज ४ ५१cd, २ab

287 प्राप्यते परम धाम यतो नावर्तते पुन । अहि ३७ २६ab

भगवत्सकल्पवशात् विष्णुशक्त्या आक्रान्तस्वरूप· जीवः ब्रह्मणि एकतां याति। तत कर्मणि क्षयं गते विष्णुशक्त्या संबोधितः आत्मा आत्मीयवासनाः शुभाशुभस्वरूपा· जानाति। यदायम् आत्मा एतादृशविवेकं लभते तदा बन्धेभ्यः मुक्त· परं ब्रह्म याति। विवेक जीवस्य प्रकृतेश्च वियोगे कारणमिति जयाख्यसंहिता मोक्षोपायं वर्णयति[288]।

विष्णुतिलकं तु ध्यानेन संपाद्यमान शरीरसंबन्धराहित्यं मोक्षोपाय इति निर्दिशति। तथा हि -

देवं समाराध्य तपस्तप्त्वा भगवत. कृपां लब्ध्वा मायां संतरति जीवः। परं ब्रह्म आराध्य तदेव शरणं गत· शरीरपाते सति परं ब्रह्म प्राप्नोति। तस्मात् सुखदु·खे शीतोष्णे च समे कृत्वा परं ब्रह्म ध्यातव्यं साक्षात्कर्तव्यं च। अनेन उपायेनैव शरीरं परित्यज्य परमे व्योम्नि परस्मिन् ब्रह्मणि आत्यन्तिकलयरूपां मुक्तिं प्राप्नुयात् इति विष्णुतिलके मोक्षोपाय· उपवर्ण्यते[289]। चित्तप्रसादनादुत्पन्नेन

---

288 अनादिवासनायुक्तो जीवोऽय वै चिदात्मक ।
तद्वासनापनोदार्थ परस्माद्ब्रह्मणो द्विज॥
तद्धर्मधर्मिणी सूक्ष्मा उदेत्येकान्तरूपिणी।
शुद्धाशुद्धात्मिका शुद्धा परमानन्दरूपिणी॥
शुद्धसर्गक्रमेणैत्य आध्यात्म्यात्मनि तिष्ठति।
करुणोदधिरूपेण भविना मोक्षदक्षमे॥
स हि संकल्पयामास मोक्षो ह्यस्यास्तु कर्मिण ।
ततो विश्वात्मशक्ति सा तदिच्छानुविधायिनी॥
प्रत्यक्चेतनमाश्रित्य तत्क्षणादवतिष्ठते।
मन्त्रशक्तिरिवादृश्या तया सबोधितो द्विज॥
त्विषाऽक्रान्तस्वरूपश्च प्रत्यगात्मा चिदात्मक ।
ब्रह्मण्येकात्मता याति कर्मवर्गे क्षय गते॥ ज ३.१७-२२

289 ततो देव समाराध्य तपस्तप्त्वा विशेषत ।
कृपा लब्ध्वा परेशस्य माया सतीरयेदपि॥
आराध्य तत्पर ब्रह्म तदेव शरण गत ।
शरीरस्य निपातेऽन्ते परे ब्रह्मणि लीय्यते॥

ज्ञानेन जीवः परमं महः प्राप्नोतीति[290], श्रद्धाभक्तिसमाधयः मुक्तिहेतवः इति[291], परमेश्वरे प्रपत्तिरेव मोक्षोपाय[292] इति च विष्णुतिलके मोक्षोपायः निर्दिश्यते।

पाद्मसंहिता पुन· निष्कामानां वासुदेवोपासकानां मोक्ष इति निर्दिशति[293]। पुरुषस्य मायासंबन्धस्य वियोगे भगवदनुग्रहस्य कारणत्वमत्र प्रादर्शि। भगवदनुग्रहश्च वर्णाश्रमधर्मव्यवस्थामनुवर्तमानानामेव भवति[294]। पुरुषस्य कर्मफलसंबन्धराहित्यं परमात्मविषयकज्ञानेन सभवतीति निर्दिशन्ती पाद्मसंहिता मोक्षे परमात्मज्ञानमुपायः इत्यभिप्रैति[295]।

तदेव साक्षात्कर्तव्य गतिर्नान्या ततो विना।
सुखदु खौ समौ कृत्वा शीतमुष्ण सहन् पुन ॥
ध्येयस्तत्परमं ब्रह्म ध्येयस्तत्कलेबरम्।
लीयेत परमे व्योम्नि परस्मिन् ब्रह्मणि स्वयम्॥ वि. ति १ १११-४

290. चित्तप्रसादनाज्ज्ञान . . .

. . .

. .

. एतैश्चित्तप्रसादनै ।
ज्ञान प्रत्यङ्मुख भूयात्तेन याति पर मह ॥ Ibid. २. १०५a, ११०bcd

291. श्रद्धा भक्ति· समाधिश्च त्रिविधा मुक्तिहेतव ॥ Ibid. २ ११७cd

292. प्रपत्ति· परमीशाने सैव स्यात्परमा गति । Ibid १ १३२ab

293 .. .. वासुदेवाह्वय स्वयम्।
विपाशयामि ससारात् ये मामेव भजन्ति तान्॥ पाद्म (ज्ञा) ४ ५bcd

294. मत्प्रसाद विना तस्य न विरामोऽस्ति कस्यचित्।
यावन्नाहं प्रसीदामि तावन्माया दुरत्यया॥

. ..

... .

वर्णानामाश्रमाणा च मर्यादा या मया कृता।
ता ये समनुवर्तन्ते प्रसादस्तेषु मे महान्॥
तस्मात्संसारिणा पुसां मत्प्रसाद विना क्वचित्।
नि श्रेयसकर नान्यद्बुध्यस्व कमलासन॥ Ibid. ५ ३, ५, ६

295 निस्पृह कर्म भजमानो न बध्यते॥

. . .

परमसंहितायां तु त्रिगुणात्मिकाया मायाया हानौ भगवत्प्रसादः कारणमिति कथ्यते[296]। संसारिणां ज्ञानाधिक्याद्विमुक्तिरिति ज्ञान मोक्षोपाय इति चात्र[297] निर्दिश्यते।

भगवतः विष्णोः कृपाकटाक्षपात्रं कर्मसाम्यं मोक्षेच्छया वैराग्यं च प्राप्य तत· गुरूपसदनद्वारा लब्धज्ञानः सन् वैष्णवं स्थानं प्रतिपद्यत इति कथयन्ती अहिर्बुध्न्यसंहिता ज्ञानं मोक्षोपायं वक्ति। तथा हि - संसृतिचक्रस्थ· जीवः स्वकर्मभिः भ्रमन् कदाचित् विष्णो. कृपाया. पात्रं भवति। विष्णोः अनुग्रहात्मिका शक्तिरेव कृपेत्युच्यते। कृपापात्रं जीव कर्मसाम्यं प्राप्नोति। भगवतः अनुग्रहशक्तेः पातानन्तरं जीवः मोक्षेच्छया वैराग्यं प्राप्य गुरून् उपसृत्य सात्त्विकं ज्ञानं लब्ध्वा स्वकर्मनिरतः वेदान्तज्ञानवान् सन् वैष्णवं स्थानं प्रतिपद्यत इति अहिर्बुध्न्यसंहिता मोक्षोपायं वर्णयति[298]।

---

. .

. यस्य ज्ञान स मुच्यते॥ Ibid ४ १४cd, ५d

296 मत्कृतायास्तु मायाया मत्प्रसादाद्विना क्वचित्।
न विरामोऽस्ति लोकेऽस्मिन् नात्र कार्या विचारणा॥
यावदेव न मायेय मत्प्रसादेन हीयते।
तावत् पुसस्तु ससारो मुक्तिरस्य विपर्यये॥

.. .

. .

तस्मात् संसारिणां पुसा मत्प्रसादाद्विना क्वचित्।
नि श्रेयसकर नान्यत् ... . ॥ पर १ ८१,२,६abc

297 ज्ञानाधिक्याद्विमुक्ति स्यात् ..। Ibid १ ६३c

298 ससृतिचक्रस्थे भ्राम्यमाणे स्वकर्मभि ॥
जीवे दु खाकुले विष्णो कृपा काप्युपजायते।
या ह्युक्ता पञ्चमी शक्तिर्विष्णुसकल्परूपिणी॥
अनुग्रहात्मिका शक्तिः सा कृपा वैष्णवी परा।

. . .

. .. .

कर्मसाम्यं भजत्येव जीवो विष्णुसमीक्षित ॥

लक्ष्मीतन्त्रं पुनः लक्ष्म्याः अनुग्रहात्मिकया शक्त्या निवृत्तक्लेशः जीव परं ब्रह्म प्राप्नोति इति कथयति। तथा हि - तिरोधानशक्त्या तिरोभूताः अविद्यया समाविद्धाः संसारसागरमध्यस्थाः चराचरजन्म प्राप्नुवन्तः संयोगवियोगजन्यैः क्लेशैः क्लिश्यमानाश्च जीवाः कारुण्यवशात् श्रिया समीक्ष्यन्ते। तद्बलाच्च निवृत्तपापाः दुःखविवर्जिता भवन्ति। अयमेव अनुग्रह इति कथ्यते। ततः जीवः स्वच्छान्तकरणः कर्मसाम्यं प्राप्य शुद्धकर्माश्रितः वेदान्तज्ञानसंपन्नः सात्त्वतज्ञानात् लक्ष्मीनारायणात्मकं परं ब्रह्म प्राप्नोति इति[299]।

. .. . . .

.. . . ...

[] तत्पातानन्तरं जन्तुर्युक्तो मोक्षसमीक्षया।
प्रवर्तमानवैराग्यो विवेकेऽभिनिवेशवान्॥
आगमाननुसंचिन्त्य गुरूनप्युपसद्य च।
लब्धसत्त्वप्रकारैस्तै प्रबुद्धो बोधपालन ॥
अक्षिण्वन् गुरुसंबोध क्षिण्वन् क्लेशादिकानपि।
विचिन्वन् सर्वत सारमुपचिन्वन् परा धियम्॥
सांख्ययोगसमावेशी सत्कर्मनिरत स्वयम्।
उग्रव्रतधरो ज्ञानी वेदान्तज्ञाननिश्चल ॥
संहतैर्विगृहीतैश्च मार्गैरभि सुनिश्चयै ।
क्लेशेन महता स्थानं वैष्णवं प्रतिपद्यते॥
संप्राप्य ज्ञानभूयस्त्वं निर्मलीकृतचेतन ।
अनाविलमसक्लेश वैष्णव तद्विशेत्पदम्॥ अहि १४.२८cd-३०ab, ३२cd, ३६ - ४१

299. अविद्यया समाविद्धा अस्मितादिवशीकृता ।
मच्छक्त्यैव तिरोभूतास्तिरोधानाभिधानया॥
उच्चान्नीचे पतन्तस्ते नीचादुत्पतयालव ।
निबद्धास्त्रिविधैर्बन्धै स्थानत्रयविवर्तिन॰॥
संसाराङ्गारमध्यस्था पच्यमाना स्वकर्मणा।
सुखाभिमानिनो दु खे नित्यमज्ञानधर्षिता.।
ता योनीरनुधावन्तश्चराचरविभेदिनी ।
अपूर्वा पूर्व भूताभिश्चित्रिताभि स्वहेतुभि ॥

[] अनुग्रहात्मिकाया शक्ते पातानन्तरम्

शुद्धविद्यासंबन्धेन संकोचं यदा जहाति तदा जीवः बन्धमुक्तो भवति इति उपदिशत् लक्ष्मीतन्त्रं शुद्धविद्याया. मोक्षहेतुत्व वक्ति। तथा हि - आविद्यं देवीस्वरूपमेव संकोचः। यदासौ जीव· शुद्धविद्यासंयोगात् संकोचं जहाति प्रद्योतमानः सर्वतः मुक्तबन्धनो भवति। ज्ञानक्रियासंयोगात् सर्ववित् सर्वकृद् भवति इति लक्ष्मीतन्त्रमुपवर्णयति।

लक्ष्मीतन्त्रे ज्ञानस्यैव मोक्षहेतुत्वं प्रतिपाद्यते। तच्च ज्ञानं विवेकजं वासुदेवैकविषयकं भवति[300]। संसारनिवृत्तिहेतुभूतस्यास्य ज्ञानस्य कर्म - सांख्य-

---

देहेन्द्रियमनोबुद्धिवेदनाभिरहर्निशम्।
जननानि प्रबध्नन्तो मरणानि तथा तथा॥
क्लिश्यमाना इति क्लेशैस्तैस्तैर्योगवियोगजै ।
उद्यत्कारुण्यसतानर्निर्वापिततदागसा॥
मया जीवा समीक्ष्यन्ते श्रिया दु.खविवर्जिता ।
सोऽनुग्रह इति प्रोक्त शक्तिपातापराह्वय ॥
कर्मसाम्य भजन्त्येते प्रेक्ष्यमाणा मया तदा।
अपश्चिमा तनु सा स्याज्जीवाना प्रेक्षिता मया॥
अहमेव हि जानामि शक्तिपातक्षण च तम्।
नासौ पुरुषकारेण न चाप्यन्येन हेतुना॥
केवलं स्वेच्छयैवाह प्रेक्षे कंचित् कदाप्यहम्।
तत प्रभृति स स्वच्छस्वच्छान्त करण पुमान्॥
कर्मसाम्य समासाद्य शुक्लकर्मव्यपाश्रय ।
वेदान्तज्ञानसंपन्न साख्ययोगपरायण ॥
सम्यक्सात्त्वतविज्ञानाद्विष्णौ सद्भक्तिमुद्वहन्।
कालेन महता योगी निर्धूतक्लेशसचय ॥
विधूय विविधं बन्ध द्योतमानस्ततस्तत ।
प्राप्नोति परम ब्रह्म लक्ष्मीनारायणात्मकम्॥ लक्ष्मी १३. २-१४
शुद्धविद्यासमायोगात् सकोच यज्जहात्यसौ।
तदा प्रद्योतमानोऽय सर्वतो मुक्तबन्धन ॥
ज्ञानक्रियासमायोगात् सर्ववित्सर्वकृत्सदा। Ibid १३ ३१,२ab

300 ज्ञान तच्च विवेकोत्थ सर्वत शुद्धमव्रणम्।
वासुदेवैकविषयमपुनर्भवकारणम्॥ Ibid १५ १२

योग - सर्वत्यागाः चत्वारः उपाया भवन्ति[301]।

वर्णाश्रमसंबन्धिनित्यनैमित्तिकरूपं काम्यभिन्नं कर्म प्रथम ज्ञानोपायः[302]।

कर्मसंन्यासश्च चतुर्धा - मन्त्रोक्तदेवतायाम्, प्रकृतौ, इन्द्रियेषु, वासुदेवे वा इति।[303]

मुमुक्षुभिः वासुदेवे कर्मसंन्यासः क्रियते। वासुदेवे कर्मसंन्यासश्च कर्तृत्वसंन्यासपूर्वकः।

मन्त्रोक्तदेवतायाम्, प्रकृतौ, इन्द्रियेषु कर्मफलबुभुक्षुभिः कर्मसंन्यासः क्रियते।[304]

सांख्यं नाम ज्ञानम्। लक्ष्मीतन्त्रानुसारेण सांख्यशास्त्रोक्तसंख्याः लौकिकीसंख्या, चर्चनात्मिका संख्या, समीचिना धीरिति तिस्रः भवन्ति। एतत्त्रितयसमूहः सांख्यमित्युच्यते।[305]

301. स्वजातिविहित कर्म साख्य योगस्तथैव च।
सर्वत्यागश्च विद्वद्भिरुपाया कथिता इमे॥ Ibid १५. १७.

302. चतुर्भिर्लक्षणैर्युक्त त्रिविधं कर्म वैदिकम्।
स्ववर्णाश्रमसंबन्धि नित्यनैमित्तिकात्मकम्॥
अकामहतसंसिद्ध कर्म तत् पूर्वसाधनम्।

303. चतुर्विधस्तु सन्यासस्तत्र कार्यो विपश्चिता॥
मन्त्रोक्तदेवतायां वा प्रकृताविन्द्रियेषु वा।
परस्मिन् देवदेवे वा वासुदेवे जनार्दने॥
पूर्नं कर्तृत्वसंन्यास फलसंन्यास एव च।
कर्मणामपि सन्यासो देवदेवे जनार्दने॥
शास्त्रीयमाचरन्नेव नित्यनैमित्तिकात्मकम्।
मदाराधनकाम सञ्शश्वत् प्रीणाति मा नर॥ Ibid १५ १९cd-२२

304. कृष्णलक्ष्मी टि. पृ ४९

305. संख्यास्तिस्रो हि मन्तव्या सांख्यशास्त्रनिदर्शिता।
प्रथमा लौकिकी सख्या द्वितीया चर्चनात्मिका॥
समीचीना तु या धी सा तृतीया परिपठ्यते।
संख्या त्रयसमूहो य साख्य तत्परिपठ्यते। Ibid. १५ २४,५

लौकिकविषयसंबद्धा संख्या लौकिकीसंख्या। सांख्योक्तपञ्चविंशतितत्त्वानां ईश्वरस्य च ज्ञानं लौकिक्यां संख्यायामन्तर्भवति। तथा हि –

चिदचिदिति तत्त्वं द्विधा। तत्र चित्तत्त्वं जीवः ईश्वर इति द्विधा भिद्यते। अचित्तत्त्वं तु चतुर्विंशतिधा-प्रकृतिमहदहंकारास्त्रयः, तन्मात्राणि पञ्च, महाभूतानि पञ्च, एकादशेन्द्रियाणि च। आहत्य षड्विंशतिस्तत्त्वानि।▯ इत्थं षड्विंशतितत्त्वानां स्वरूपविज्ञानं प्रथमं सांख्यम्।[306]

प्रकृतिपुरुषयोः साधर्म्यवैधर्म्यपरिशीलनमेव चर्चनात्मिका संख्या इत्यभिधीयते। प्रकृतिपुरुषौ स्वतः असक्तौ सक्ताविव स्थितौ, महद्भ्यः महाकारौ, लिङ्गप्राप्यौ, नित्यौ, अलिङ्गरूपौ च भवतः इति तयोः साधर्म्यम्। एवं तयोर्वैधर्म्यमपि वर्तते। प्रकृतिः त्रिगुणा, नित्यं परिणामिनी, अविवेका, अशुद्धा, सर्वजीवसमा, अचेतना, सुखदुःखमोहयुक्ता च। पुरुषस्तु मध्यस्थः, नित्यः, क्रियावानपि अविह्वलः (निर्विकारः), साक्षी, द्रष्टा, शुद्धः, अनन्तश्च इत्थमनयोर्वैधर्म्यम्। इत्थं साधर्म्यवैधर्म्याभ्यां प्रकृतिपुरुषयोः स्वरूपपरिशीलनं चर्चनात्मिकासंख्या इत्युच्यते।[307]

306 Ibid. १५.२६-३६

Ibid १६ १-११ab

307 इमौ स्वरसतोऽसक्तौ सक्तात्मानमिव स्थितौ।
प्रकृतिः पुरुषश्चैव महद्भ्यश्च महत्तरौ॥
लिङ्गग्राह्यावुभौ नित्यावलिङ्गौ चाप्युभावपि।
साधर्म्यमेवमाद्येवमनयोरुन्नयेद्बुध ॥
वैधर्म्यमनयोः शक्र कथ्यमानं निबोध मे।
प्रकृतिस्त्रिगुणा नित्य सतत परिणामिनी॥
अविवेकाप्यशुद्धा च सर्वजीवसमा सदा।
विषयोऽचेतना चैव सुखदुःखविमोहिनी॥
मध्यस्थः पुरुषो नित्यः क्रियावानप्यविह्वलः।
साक्षी दृशिस्तथा द्रष्टा शुद्धोऽनन्तो गुणात्मकः॥
वैधर्म्यमनयोरेतत् ... .... । Ibid १६ १५-२०ab

▯ द्र. कृष्ण लक्ष्मी टि पृ. ५१

पूर्वोक्तप्रकारेण साधर्म्यवैधर्म्यपरिशीलनात्परं तत्त्वविषयकं यत् समीचीनं ज्ञानं जायते तत्तृतीयं विज्ञानम्।[308]

योगः विज्ञानस्य तृतीयं साधनम। तत्र योगः समाधिः संयमश्चेति द्विविधः।[309]

श्रीनिवासाख्ये परे ब्रह्मणि समाद्यङ्गसमुद्भूता संस्थितिः साक्षात्कारमयी ध्यातृध्येयविभागशून्या समाधिः इत्युच्यते।[310]

परमात्मैक गोचरं सत्कर्म सयम[311] इत्युच्यते। स च शरीरिकः मानसिकश्चेति द्विविधः।

इत्थं कर्म-सांख्य-योगानां मोक्षोपायानां त्रयाणां विवरणं लक्ष्मीतन्त्रे उपलभ्यते। कर्मरूपः प्रथमः उपायः अन्तःकरणशुद्धिद्वारा ज्ञानं जनयेत्। तेन कर्मणा प्रीतो भगवान् संख्याख्यं द्वितीयम् उपायं प्रयच्छति। सांख्ययोगेन यत् परोक्षज्ञानं जायते, ज्ञानं च दार्ढ्यं प्राप्नोति तदा ईश्वरः प्रसन्नो भवति। प्रत्यक्षतापन्नः समाधिरूपो योगस्तु तृतीयः उपायः। इत्थं कर्मयोगनिर्मलीकृतस्वान्तः सांख्य-योगनिर्वर्तनेन मोक्षं प्राप्नुयादिति पञ्चरात्रसंहिताः[312] कथयन्ति।

---

308. चर्चायामिह सख्यायां सिद्धायाममलात्मनि॥
उदेति या समीचीना सख्या सत्तत्त्वगोचरा।
एषा सा परमा संख्या मत्प्रसादसमुद्भवा॥ Ibid १६.२७cd,८

309. योगस्तु द्विविधो ज्ञेय समाधि सयमस्तथा॥ Ibid. १६.३०cd

310. यमाद्यङ्गसमुद्भूता समाधि स्थिति. परे।
ब्रह्मणि श्रीनिवासाख्ये ह्युत्थानपरिवर्जिता॥
साक्षात्कारमयी सा हि स्थिति सद्ब्रह्मवेदिनाम्।
ध्यातृध्येयविभागस्था मत्प्रसादसमुद्भवा॥ Ibid. १६ ३१,२

311 सयमो नाम सत्कर्म परमात्मैकगोचरम्।
तत्पुनर्द्विविध प्रोक्त शारीर मानस तथा॥
विस्तरेणाभिधास्येते समाधि सयमस्तथा। Ibid. १६ ३३,४ab

312 प्रथमो य उपायस्ते कर्मात्मा कथित पुरा॥
सज्ञान जनयेच्छुद्धमन्त करणशोधनात्।

पूर्वोक्तेषु कर्म-सांख्ययोगाख्येषु त्रिषु उत्तारहेतुषु अशक्तस्य कालविलम्बाक्षमस्य च पुरुषस्य विषये सर्वत्यागरूपः न्यासयोगः मोक्षोपायतया पञ्चरात्रसंहितासु प्रतिपाद्यते । न्यासयोग एव प्रपत्तिः, प्रपदनं, शरणागतिः इत्यादिपदैरुच्यते।

अहमस्म्यपराधानामालयोऽकिंचनोऽगतिः ॥

त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः ।

शरणागतिरित्युक्ता सा देवेऽस्मिन् प्रयुज्यताम् ॥[313]

इति भगवति सर्वसमर्पणभाव एव शरणागतिरित्युच्यते।

आनुकूल्यस्य संकल्पः, प्रातिकूल्यस्य वर्जनम्, रक्षिष्यतीति विश्वासः, गोप्तृत्ववरणम्, आत्मनिक्षेपः, कार्पण्यम् इति षडङ्गा शरणागतिः ।[314]

---

तेन हि प्रीणिता साहं सदाचारनिषेवणात् ॥
ददामि बुद्धियोग तमन्त करणशोधनम् ।
साख्य नाम द्वितीयो य उपाय कथितस्तव ॥
परोक्ष शास्त्रजन्योऽसौ निर्णयो दृढता गत ।
प्रत्यक्षतामिवापन्नो मत्प्रीति जनयेत्पराम् ॥
अह सख्यायमाना हि स्वरूपगुणवैभवै ।
उद्भावयामि तज्ज्ञान प्रत्यक्ष यद्विवेकजम् ॥
तृतीयस्तु समाध्यात्मा प्रत्यक्षोऽविप्लवो दृढ ।
प्रकृष्टसत्त्वसंभूत प्रसादातिशयो हि स ॥
तृतीयस्य विधा योऽसौ सयमो नाम वर्णित ।
भोगै शुद्धैस्त्रिधोद्भूतैरत्यन्तप्रीतये मम ॥
अह हि तत्र विश्वात्मा विष्णुशक्ति परावरा।
साक्षादेव समाराध्या देवो वा पुरुषोत्तम ॥
इति ते कथिता सम्यगुपायास्त्रय ऊर्जिता । Ibid १६.३४cd-४२ab

313 अहि. ३७.३०cd,१

314 षोढा हि वेदविदुषो वदन्त्येन महामुने ॥
आनुकूल्यस्य सकल्प प्रातिकूल्यस्य वर्जनम्।

सर्वेषां प्राणिनाम् अनुकूलताबुद्धिः एवं परमात्मनि अनुकूलताबुद्धिश्च आनुकूल्यसंकल्प[315] इत्युच्यते।

सर्वभूतेषु परमात्मनि च प्रतिकूलत्वबुद्धित्याग· प्रातिकूल्यवर्जनमित्युच्यते[316]।

भगवतः भूतानां च ईशेशितव्यादि संबन्धज्ञानात् भगवान् रक्षिष्यतीति सुदृढा मतिः विश्वास इत्युच्यते।[317]

मद्रक्षको भव इति भगवत्प्रार्थनं गोप्तृत्ववरणमित्युच्यते।[318]

भगवता रक्ष्यमाणस्य स्वस्य फलस्वामिमत्वबुद्धित्यागपूर्वकं केशवे स्वात्मरक्षाभारसमर्पणम् आत्मनिक्षेप इत्युच्यते।[319]

विद्यावृत्तादिजन्यस्य सर्वस्य त्यागः कार्पण्यम्। साकल्येन अङ्गानाम् अनुष्ठातुमशक्यतया देशकालवैगुण्येन कर्मणां यथावदनुष्ठातुमशक्यतया च यत

---

रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा॥
आत्मनिक्षेपकार्पण्ये षड्विधा शरणागति । Ibid ३७ २७cd, ९ab

315. आनुकूल्यमिति प्रोक्त सर्वभूतानुकूलता।
अन्त·स्थिताह सर्वेषा भावानामिति निश्चयात्॥
मयीव सर्वभूतेषु ह्यानुकूल्य समाचरेत्। लक्ष्मी १७ ६६,७ab

316 तथैव प्रातिकूल्य च भूतेषु परिवर्जयेत्। Ibid १७ ६७cd

317 ईशेशितव्यसंबन्धादनिद प्रथमादपि।
रक्षिष्यत्यनुकूलान्न इति या सुदृढा मति ॥
स विश्वासो भवेच्चक्र सर्वदुष्कृतनाशन । Ibid १७ ७१,२ab

318 करुणावानपि व्यक्त शक्त स्वाम्यपि देहिनाम॥
अप्रार्थितो न गोपायेदिति तत्प्रार्थनामति ।
गोपायिता भवेत्येवं गोप्तृत्ववरण स्मृतम्॥ Ibid १७ ७२cd,३

319. तेन संरक्ष्यमाणस्थ फले स्वाम्यविमुक्तता।
केशवार्पणपर्यन्ता ह्यात्मनिक्षेप उच्यते॥ Ibid १७ ७४

दैन्यं दर्पहानिपर्यवसितं तत् कार्पण्यमिति यावत् ।[320]

अयं शरणागतिरूपः चतुर्थोपाय· शीघ्रफलप्रदो भवति। एतस्मिन् उपाये वर्तमानानां पूर्वे त्रय· कर्म-साङ्ख्यादयः न मनोहराः । अपायाद्विनिवृत्तिः आनुकूल्यसंकल्पप्रातिकूल्यवर्जनाभ्यां भवति । अपायो नाम निषिद्धाचरणं विहिताकरणं च । कार्पण्येन उपायानामितरेषां निवृत्तिर्भवति । रक्षिष्यतीति विश्वासात् भगवानेव इष्ट उपायः इति सिध्यति । गोप्तृत्ववरणेन स्वाभिप्रायनिवेदनं भवति। सदा कारुणिकोऽपि सर्वज्ञोऽपि विश्वेशः जीवस्य रक्षापेक्षां विना न रक्षति । आत्मनः आत्मरक्षणभरस्य च भगवति न्यासः आत्मनिक्षेप इत्युच्यते।[321]

हिंसा चौर्यमित्यादय· शास्त्रेषु अपायत्वेन कर्म-ज्ञान-भक्तयः उपायत्वेन च दर्शिता. । अपायान् उपायांश्च परित्यज्य मध्यमां स्थितिमास्थितः भगवान् रक्षिष्यतीति निश्चित्य स्वात्मानं भगवति निक्षिप्य भगवानेव गोप्ता इति यः बुध्यते

---

320 त्यागो गर्वस्य कार्पण्य श्रुतशीलादिजन्मन ।
अङ्गसाम्रग्र सपत्तेरशक्तेरपि कर्मणाम् ।।
अधिकारस्य चासिद्धेर्देशकालगुणक्षयात् ।
उपाया नैव सिध्यन्ति ह्यपाया बहुलास्तथा ।।
इति या गर्वहानिस्तद्दैन्य कार्पण्यमुच्यते । Ibid. १७.६८-७०ab

321. उपयोऽयं चतुर्थस्ते प्रोक्त शीघ्रफलप्रद ।
अस्मिन् हि वर्तमानानां विप्रनिषेविते ।।
पूर्वे त्रय उपायास्ते भवेयुरमनोहरा ।
आनुकूल्येतराभ्या च विनिवृत्तिरपायत ।।
कार्पण्येनाप्युपायाना विनिवृत्तिरिहोदिता ।
रक्षिष्यतीति विश्वासादभीष्टेपायकल्पनम् ।।
गोप्तृत्ववरण नाम स्वाभिप्रायनिवेदनम् ।
सर्वज्ञाऽपि हि विश्वेश सदा कारुणिकोऽपि सन् ।।
स[illegible]रतन्त्रवाहित्वाद्रक्षापेक्षा प्रतीक्षते ।
आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते ।। Ibid १७ ७६-८०

स शरणागतिनिष्ठः कथ्यते।[322]

ननु अत्र मध्यमावृत्तिर्नाम का इति चेत् उच्यते - कर्माणि अनर्थसाधनानि, अर्थसाधनानि, अनर्थपरिहारसाधनानि इति त्रिविधानि भवन्ति। हिंसादीनि अनर्थसाधनानि, ज्योतिष्टोमादीनि स्वर्गाद्यर्थसाधनानि, प्रायश्चित्तादीन्यनर्थपरिहारसाधनानि।

हिंसादयः अपाया इति, ज्योतिष्टोमादयः उपाया इति कथ्यन्ते। तावुभौ शरणागतः परित्यजेत्।

अनर्थपरिहारः कर्मराशिः द्विविधः। कश्चित् उत्पन्नानर्थनाशकः प्रायश्चित्तादिः, भावि अनर्थपरिहारः नित्यनैमित्तिकादिः इति। मनीषी शरणागतः प्रायश्चित्तं नैव कुर्वीत।

क्रियमाणं यत् कर्म कस्मैचित् प्रयोजनाय न कल्पते। अकरणे च अनर्थाय भवति। तादृशं नित्यनैमित्तिकं कर्म तु अवश्यं समाचरेत्।

इयमेव शरणागतस्य उपायापायमध्यस्था स्थितिः[323]।

---

322 हिसास्तेयादयः शास्त्रैरपायत्वेन दर्शिता ।
कर्मसाख्यादय शास्त्रैरुपायात्वेन दर्शिता ॥
अपायोपायसंत्यागी मध्यमा स्थितिमास्थित ।
रक्षिष्यतीति निश्चित्य निक्षिप्त स्वस्वगोचर ॥
बुध्येत देवदेवेशं गोप्तार पुरुषोत्तमम्। Ibid १७ ८१-३ab

323. त्रिविधा पश्य देवेश कर्मणो गहना गतिम्॥
निषेधविधिशास्त्रेभ्यस्ता विधा च निबोध मे।
अनर्थसाधन किचित्किचिच्चाप्यर्थसाधनम्॥
अनर्थपरिहारं च किचित् कर्मोपदिश्यते।
त्रैराश्यं कर्मणामेव विज्ञेय शास्त्रचक्षुषा॥
अपायोपायसंज्ञौ तु पूर्वराशी परित्यजेत्।
तृतीयो द्विविधो राशिरनर्थपरिहारक ॥
प्रायश्चित्तात्मक कश्चिदुत्पन्नानर्थनाशन ।
तमश नैव कुर्वीत मनीषी पू[illegible] ॥

अस्यां मध्यमाया स्थितौ स्थित जगन्नाथं जनार्दनं सकृत् प्रपद्येत। सकृदेव अनुष्ठित अयमुपाय· संसारतारणहेतुः। यदि शरणागतेः उपायापायसंयोग· भवेत् तदा हानिः स्यात्। अपायसंभवे सद्यः पुनः शरणागतिरूपं प्रायश्चित्तं कुर्यात्। शरणागतावपि उपायत्तबुद्धि· नैव कर्तव्या। एवं स्थितः श्रीशं परमात्मानं प्राप्य मुक्तो भवति।[324]

ब्रह्मसिद्धिप्रदस्य ज्ञानस्य सत्ताख्यत्वेन क्रियाख्यत्वेन द्वैविध्यं पञ्चरात्रसंहितासु निर्दिश्यते। क्रियाख्यात् ज्ञानात् सत्ताख्यं ज्ञानं मानवः प्राप्नोति। सत्ताख्यात् ज्ञानात् ब्रह्माभिन्नं ज्ञानं भवति। ब्रह्माभिन्नात् ज्ञानात् परं ब्रह्म प्राप्नोति।[325]

किं च, अकृतबुद्धेर्नरस्य कर्मयोगे, कृतबुद्धे· विद्याविनीतस्य ज्ञानयोगे अधिकारः इति पाञ्चरात्रसंहितासु उपपाद्यते। क्रियारूपो धर्मः ज्ञानस्य साधनं

---

क्रियमाण न कस्मैचिद्यदर्थाय प्रकल्पते।
अक्रियावदनर्थाय तत्तु कर्म समाचरेत्॥
एषा सा वैदिकी निष्ठा ह्युपायापायमध्यमा। Ibid. १७.८५cd, ९१ab

324 अस्या स्थितो जगन्नाथ प्रपद्येत जनार्दनम्॥
सकृदेव हि शास्त्रार्थ कृतोऽय तारयेन्नरम्।
उपायापायसयोगे निष्ठया हीयतेऽनया॥
आपायसंप्लवे सद्य प्रायश्चित्त समाचरेत्।
... . . ... ..
उपायत्वग्रह तत्र वर्जयन् मनसा सुधी।
चतुर्थमाश्रयन्नेव मुपाय शरणाश्रयम्॥
अतीत्य सकल क्लेश संविशत्यमल पदम्॥ Ibid १७.९१cd-९३ab; ९९,१००ab

325 ज्ञान तु द्विविध विद्धि सत्ताख्य च क्रियात्मकम्।
सत्ताख्यस्य क्रियाख्येन अभ्यस्तेन भवेद्धति·॥
एवं क्रियाख्यात्सत्ताख्य ज्ञान प्राप्नोति मानव।
.. ... . . ...
ब्रह्मण्यभिन्न सत्ताख्यात् ज्ञानाज्ज्ञानं ततो भवेत्॥
ब्रह्माभिन्नात्ततो ज्ञानाद्ब्रह्म संयुज्यते परम्। ज. ४.४०, ५०, १ab

326 क्रियारूप स्मृतो धर्मो ज्ञानरूपं च तत्पुन।

भवति। ज्ञानेन मोक्षः साध्यते। क्रिया ज्ञानस्य शोधिनी इति मोक्षसाधनभूतं ज्ञानं, विना विशुद्धं कर्म न निष्पद्यत इति पाञ्चरात्रिकैरुच्यते[328]।

पूर्वोक्तेषु मोक्षोपायेषु परिशीलितेषु सत्सु कर्मसहकृतज्ञानं प्रपत्तिर्वा मुक्तिकारणमिति, कर्मसहकृतज्ञानप्रपत्ती भगवत्प्रसादमूले इति च प्रतीयते।

---

ज्ञानेन साध्यते मोक्ष क्रिया ज्ञानस्य शोधिनी ॥
धर्मेण च कृत ज्ञानं न कचित्प्रतिहन्यते।

केवल खलु विज्ञान धर्मस्यानुग्रह विना।
संसारवासनाविष्टं न प्रसीदति किचन ॥ पर.१२ ५९,६०ab.१

# चतुर्थोऽध्यायः

## ४. उपसंहरणम्

### ४.१. उपसंहारः

तदित्थं 'पञ्चरात्रसंहितासु ज्ञानपादसमीक्षणम्' इत्यस्मिन् शोधप्रबन्धे वैषणवागम - तत्परिचयपरे प्रथमाध्याये आगमः, आगमस्य प्रामाण्यम्, आगमस्य आत्मोन्नतिसाधकत्त्वम् , विग्रहाराधनस्य श्रुत्यादिसंमतत्वम्, आगमभेदाः, दक्षिणापथे आगमसंप्रदायः, आगमप्रतिपाद्यम्,वैष्णवागमः, तत्र वैखानसागमः, वैखानसागमस्य विष्णुपारम्यबोधकत्वम्, वैखानसागमप्रवक्ता, वैखानसागमस्य विष्णवर्चनप्रकारोपदेशकत्वम्, वैखानसागमप्रतिपाद्यम्, वैखानसागमप्रामाण्यम्, वैखानसागमस्य आलयार्चनोपयोगित्वम्, वैखानसागमग्रन्थाः, वैष्णवागमे पञ्चरात्रागमः, पञ्चरात्रागमप्रवक्ता, पञ्चरात्रसंज्ञाविशेषाः, पञ्चरात्रस्य श्रुतिमूलत्वम्, पञ्चरात्रस्य प्रामाण्यम्, पञ्चरात्रस्य प्राचीनता, पञ्चरात्रशब्दनिर्वचनम्, पञ्चरात्रस्य आगमसिद्धान्तादिभेदेन चतुर्विधत्वम्, पञ्चरात्रागमग्रन्थाः - इत्येते विषयाः विशदीकृताः।

पञ्चरात्रप्रतिपाद्यपरे द्वितीयाध्याये पञ्चरात्रप्रतिपाद्यविभागानां ज्ञानपाद-योगपाद-क्रियापाद-चर्यापादानां विचाराः प्रस्तुताः।

पञ्चरात्रज्ञानपादप्रतिपाद्यविवेचनपरे तृतीयाध्याये परमात्मस्वरूपम्, परमात्मस्वरूपनिरूपकाणां शब्दानां श्रुतिस्मृत्याद्यनुगामित्वम्, परमात्मस्वरूपनिरूपणपराणां पदानामर्थवैशिष्ट्यम्, भगवतः रूपभेदाः, भगवतः

षाड्गुण्यम्, विष्णुशक्तिः, विष्णुशक्तिनिरूपणपराणा पदानामर्थवैशिष्ट्यम्, विष्णुशक्तेः पञ्चकर्माणि, विष्णुशक्तेः षट्कोशाः, विष्णुशक्तेः क्रियाभूतिशक्ति-भेदेन द्विधा व्यवस्थितिः, जीवस्वरूपम्, प्रलयः, सृष्टिः, शुद्धसृष्टिः, व्यूहसृष्टिः, व्यूहान्तरसृष्टिः, विशाखयूपः, विभवसृष्टिः, अर्चासृष्टिः, शुद्धेतरसृष्टिः, ब्रह्मादिसृष्टिः, बन्धः तद्धेतुश्च, मोक्षः तदुपायश्च - इत्येते विषयाः समीक्षिताः।

उपसंहरणात्मके चतुर्थेऽस्मिन् अध्याये शोधप्रबन्धेऽस्मिन् प्रतिपादितानां विचाराणामुपसंहरणम्, परिशिष्टात्मके पञ्चमे अध्याये शोधप्रबन्धेऽस्मिन् यथास्थानम् उपनिवेशयितुम् अशक्तानाम् अस्मच्छोधोपकरणानां तत्तद्विषयानुरोधेन संकलनं च विहितमास्ते।

पञ्चभिरध्यायैरुपेतोऽयं शोधप्रबन्धः पञ्चरात्रागमस्य ज्ञानपादस्य प्राशस्त्यं विवेचयन् पञ्चरात्रागसिद्धान्तजिज्ञासूनां विदुषां विमर्शकानां गवेषकाणां च महते उपकाराय स्यादिति विश्वसिति नश्चेत ।

श्रीकृष्णार्पणमस्तु

# पञ्चमोऽध्यायः

## ५. परिशिष्टम्

(पृ.68) 6 आनन्दलक्षणं ब्रह्म सर्वहेयविवर्जितम् ॥
स्वसंवेद्यमनौपम्यं परा काष्ठा परा गतिः ।
सर्वक्रियाविनिर्मुक्तं सर्वेषामाश्रयं प्रभुः ॥
चिन्तामणौ यथा सर्वं मूर्तं साङ्गि व्यवस्थितम् ।
तथा सर्वं तु सर्वत्र विद्यते सर्वगस्य च ॥
अनादि तदनन्तं च न सत्तन्नासदुच्यते ।
सर्वत्र करवाक्पादं सर्वतोऽक्षिशिरोमुखम् ॥
सर्वतःश्रुतिमद्विद्धि सर्वमावृत्य तिष्ठति ।
सगुणैरिन्द्रियैः सर्वैर्भासितं चैव वर्जितम् ॥
तदसक्तं हि सर्वत्र यत्तु सर्वत्र चैव हि ।
निर्गुणो गुणभोक्ता च सर्वस्यान्तर्बहिःस्थितः ॥
चलाचलं तु तद्विद्धि सूक्ष्मत्वान्नोपलभ्यते ।
दूरस्थितस्तथा हृत्स्थः परमात्मा परः प्रभुः ॥
भूतेभ्यश्चाविभक्त तद्विभक्तमुपलभ्यते ।
स भावभूतभृच्च स्यात्संहर्तापि सृजत्यपि ॥
प्रकाश्यं ज्योतिषां तच्च अज्ञानात्परतः स्थितम् ।
ज्ञानं तदेव ज्ञेयं च तद्ध्यानेनाधिगम्यते ॥
सर्ववर्णरसैर्हीनं सर्वगन्धरसान्वितम् ।

सर्वज्ञः सर्वदर्शी च सर्वः सर्वेश्वरः प्रभुः ॥
सर्वशक्तिमयश्चैव स्वाधीनः परमेश्वरः ।
अनादिश्चाप्यनन्तश्च सर्वदुःखविवर्जितः ॥

ज ४. ६०cd-७०

(पृ.68) 7 . . . . . . . . . परमात्मानमव्ययम् ॥
हेयोपादेयरहितं सुसितानन्दविग्रहम् ।
प्रमाणैरपरिच्छेद्यं यतः संविन्मयं महत् ॥

. . . . . . . . . . . . . . .

एष नारायणो देवः सर्वोपाधिविवर्जितः ॥
स्वात्मसंवेदनत्वाद्यो विना लक्ष्यः परः प्रभुः ।

Ibid. ४. १०४d, ५, ६cd,७ab

(पृ.68) 8 स्रष्टा पालयिता चाहं संहर्ता पुनरेव च ।
स्वकीययोगयुक्त्या तु स्थूलरूपेण नारद ॥
सूक्ष्मेण सर्वभूतानां निवसामि हृदन्तरे ।
करोम्यनुग्रहं चापि भक्तानां भावितात्मनाम् ॥
परेणानन्दरूपेण व्यापकेनामलेन च ।
व्यासयाम्यखिलं विप्र रसेनेव तरूत्तमम् ॥

Ibid. ४. २३-५

(पृ.69) 9 आनन्दलक्षणं ब्रह्म नादरूपमविक्रियम् ।
क्लेशादिभिरसंस्पृष्टं निष्क्रियं निर्विकल्पकम् ॥
अद्वन्द्वमनवच्छिन्नं स्वसंवेद्यं निरञ्जनम् ।
सुसूक्ष्मं स्ववशं स्वैरं स्वयंज्योतिरनादिमत् ॥
अनन्तमक्षयं शान्तमदृष्टान्तमवृद्धिमत् ।
ध्रुवमेकं सदानन्दं चिद्रूपं सर्वगं परम् ॥
गतागतविनिर्मुक्तं वासुदेवाह्वयं विभु ।

प्रभवं सर्वभूतानामीश्वरं पुरुषोत्तमम् ॥
स्वभावनिर्मलं नित्यं निस्तरङ्गं निराकुलम् ।
निर्मर्यादं गुणातीतं सगुणं सर्वकामदम् ॥
हीनवर्णैरसंसेव्यं मोक्षमार्णैरतर्कितम् ।
अध्येयं ध्येयमाश्चर्यमवाङ्मनसगोचरम् ॥
षाड्गुण्यविग्रहं सर्वशक्तिस्वाश्रयमाश्रितम् ।
भूतेशं भूतकृद्भूतं तमस· परत· स्थितम् ॥
प्रधानं प्रकृतेरन्यद्भोग्यं भोक्तृ निरङ्कुशम् ।
प्रमाणप्रत्ययातीतं सर्वतोऽक्षिशिरोमुखम् ॥
सर्वत· पाणिचरणं सर्वमावृत्यविष्ठितम् ।
बहिरन्तः स्थितं व्यापि सर्वतन्त्रतिशासनम् ॥
अजमोङ्कारमव्यक्तं मूलमन्त्रात्मकं शिवम् ।
मायारूपं च मायाभि· नित्यतृप्तमणोरणु ॥
महतोऽपि महास्थूलमतुल मृदु दीप्तिमत् ।
अमूर्तं मूर्तमोजस्वि चिद्घनं निरुपद्रवम् ॥

पाद्म.ज्ञा.५.२९-३९

(पृ.69) 10 आदिमध्यान्तरहितमवृद्धिक्षयमच्युतम् ॥
नित्यं निरुपमं ज्योतिर्नित्यतृप्तं निरञ्जनम् ।
सर्वाकारं निराकारं तमस· परमव्ययम् ॥
तत्कारणवशात्तस्मादाविरासीत्सनातनात् ।
द्विहस्तमेकवक्त्रं च शुद्धस्फटिकसंनिभम् ॥
सहस्ररविवह्नीन्दुलक्षकोटिसमप्रभम् ।
मरीचिचक्रमध्यस्थ चक्राद्यायुधलाञ्छितम् ॥
श्रीवत्सकौस्तुभोरस्कं वनमालाविराजितम् ।
किरीटहारकेयूरवलयादिविभूषितम् ॥

पीताम्बरधरं सौम्यं रूपमाद्यं सनातनम्।

Ibid. २ ६cd-११ab

(पृ.69) 11 स्थूलं सूक्ष्मं परं तस्य त्रिविधं रूपमीरितम्।

Ibid ६.३७ab

(पृ.69)12 अव्यक्तमच्युतं ब्रह्मानादिमध्यान्तमक्षरम्।
नित्यतृप्तं निरुपमं निर्मलं परमं महः ॥
विकारो नैव वर्णानां तमसस्तत्परं महत्।
नोष्णं न शीतं मिश्रं वा सर्वाकारं निरामयम् ॥
निराकारं परं तत्त्वं न ज्ञाता तस्य विद्यते।
मुमुक्षुभिस्तद्विज्ञेयं सर्वत्र व्याप्य वर्तते ॥
तत्कारणवशादासीच्चिद्‌घनं स्फटिकप्रभम्।
अनेकार्केन्दुवह्नीनां तेजोराशिरिवामलम् ॥
भानुचक्रान्तरगतं द्विहस्तं चक्रधृत्परम्।
किरीटहारकेयूरश्रीवत्सवनमालिकम् ॥
मञ्जीरपीतवसनं चारुकुण्डलमण्डितम्।

वि ति २ ५-१०ab

(पृ.70) 13 अविक्रियं दिव्यरूपं स्वयंवेद्यं निरञ्जनम्।
निर्दोषमनवच्छिद्रमस्पृष्टं निर्विकल्पकम् ॥
अद्वन्द्वमक्षयं शान्तमर्कज्योतिरनामयम्।
चिदानन्दस्वरूपं तददृष्टान्तमबुद्धिमत् ॥
स्वभावनिर्मलं शुद्धं गतागतविवर्जितम्।
निर्मर्यादं निस्तरङ्गं निर्विकारं निराकुलम् ॥
प्रभवं सर्वभूतानां वासुदेवाह्वयं महः।
हीनवर्णैर्मोक्षमाणैरसंसेव्यमतर्कितम् ॥
सततं योगिभिर्ध्येयमध्येयं चाप्यगोचरम्।

प्रधानप्रकृतेरन्यद्भोग्यं भोक्तृनिराश्रयम् ॥
सर्वतोऽक्षिशिरोवक्त्रश्रुतिपाणिपदं परन् ।
अन्तर्बहिश्च सर्वत्र स्वयं व्याप्य प्रकाशते ॥
ओंकारमक्षरं व्यक्तं मायारूपं शिवंकरम् ।
मूलमन्त्रात्मकं नित्यमव्यक्तमजमच्युतम् ॥
महतोऽपि महद्ब्रह्मन्नणोरणु मुदोर्मृदु ।
अमायं चिद्घनं मूर्तममूर्तं ब्रह्म तद्विधे ॥

Ibid २ ७५-८२

(पृ.70) 14 तमेवं पुरुषं विष्णुं मामवेहि पितामह ।

. . . . . . . . . . . . . . .

मामेव बहुधा यज्ञैर्यजन्ते सर्वमानवा· ।
अनुध्यायन्ति मामेव योगिनो विजितेन्द्रियाः ॥
स्तुत्यैः स्तुवन्ति मामेव भक्त्या संपूजयन्ति च ।
प्रवदन्ति च मामेव वेदशाखाशिरांसि च ॥
अहमेव विराडात्मा सर्वलोकात्मक· स्थितः ।
मयि लोका· स्थिता· सर्वे तेनास्मि जगतः प्रभु· ॥

पर २ १०७ab,१०८-१०

(पृ.70) 15 एक निर्दु·खनिःसीमसुखानुभवलक्षणम् ।
अनाद्यन्तं परं ब्रह्म नारायणमनामयम् ॥
सर्वभूतकृतावासं सर्व व्याप्य व्यवस्थितम् ।
निरवद्यमविक्षिप्तमतरङ्गार्णवोपमम् ॥
अप्राकृतगुणस्पर्शमप्राकृतगुणास्पदम् ।
भवोदधे· परं पारं निष्कलङ्कं निरञ्जनम् ॥
आकारोद्देशत· कालादनवच्छेदयोगतः ।
पूर्णं नित्योदित व्यापि हेयोपादेयतोज्झितम् ॥

इदमीदृगियत्ताभिरपरिच्छेद्यमञ्जसा। अहि २,२२-६ab

(पृ.70) 16 सर्वप्रत्यक्षदर्शित्वात्सर्वात्मा तत्परं पदम्।
अतीतानागते काले मध्यतः प्रतिसंहृते ॥
वर्तमानं न तद्ब्रह्म नातीतं नैव भावि तत्।
अग्रत· पृष्ठतो नैव नोर्ध्वतः पार्श्वयोर्द्वयो· ॥
न कल्माषं न विकलं न कृष्णं न च पिङ्गलम्।
न सारङ्गपिशङ्गं न कपिलं नारुणं न च ॥
(न बभ्रु न कुलं नैव न श्यामं न च रोहितम्।
न दीर्घं नैव च ह्रस्व न स्थूलं नैव चाप्यणु ॥
न वृत्तं नाप्यपावृत्तं नाश्रितं तदनाश्रितम्।
नैव भावो न चाभावस्तद्भावार्चितये न च ॥)
न शीतं नापि चैवोष्णं नानुष्णाशीतमाप्युत।
न दुःखं न सुखं नैव निर्दु·खं सुखमव्रणम् ॥
न मूलं नापि तन्मध्यं नैवान्तं कस्यचिन्मुने।
न शेते तन्न चैवास्ते न तिष्ठति न गच्छति ॥
सर्वद्वन्द्वविनिर्मुक्तं सर्वोपाधिविवर्जितम्।
षाड्गुण्यं तत्परं ब्रह्म सर्वकारणकारणम् ॥

Ibid २ ४६-५३

(पृ.71) 17 अस्ति निर्दुः खनि·सीमसुखानुभवलक्षण·।
परमात्मा परं यस्य पदं पश्यन्ति सूरयः ॥
कस्यचित्केषांचिदात्मा स्यात्तस्यान्येषां च कश्चन।
तस्याप्यन्य इतीत्थं तु यत्रैषा व्यवतिष्ठते ॥
अध्वनामध्वन पारं परमात्मानमूचिरे।
अहं नाम स्मृतो योऽर्थ. स आत्मा समुदीर्यते ॥
अनवच्छिन्नरूपोऽहं परमात्मेति शब्द्यते।

क्रोडीकृतमिदं सर्व चेतनाचेतनात्मकम् ॥
येन सोऽहं स्मृतो भाव· परमात्मा सनातन· ।
स वासुदेवो भगवान् क्षेत्रज्ञ· परमो मत ॥
विष्णुर्नारायणो विश्वो विश्वरूप इतीर्यते ।
अहं तया समाक्रान्तं तस्य विश्वमिदं जगत् ॥
वस्त्ववस्तु च तन्नास्ति यन्नाक्रान्तमहंतया ।
इदंतया यदालीढमाक्रान्तं तदहंतया ॥
सर्वतः शान्त एवासौ निर्विकारः सनातनः ।
अनन्तो देशकालादिपरिच्छेदविवर्जित· ॥
महाविभूतिरित्युक्तो व्याप्ति. सा महती यत ।
तद्ब्रह्म परमं धाम निरालम्बनभावनम् ॥
निस्तरङ्गामृताम्भोधिकल्पं षाड्गुण्यमुज्ज्वलम् ।
एकं तच्चिद्घन शान्तमुदयास्तमयोज्झितम् ॥
अपृथग्भूतशक्तित्वाद् ब्रह्माद्वैतं तदुच्यते ।

लक्ष्मी २ १-११ab

(पृ.71) 18 एकवक्त्रो द्विहस्तश्च शुद्धस्फटिकसंनिभः ।
अयुतादित्यवह्नीन्दुकोटिकोटिसमप्रभ· ॥
तेजोऽतिरेकाद् दुष्प्रेक्ष शङ्खचक्रधरः स्वयम् ।
कौस्तुभं वक्षसा बिभ्रत् श्रीवत्सश्रीनिकेतन· ॥
पीताम्बरधरो नित्यं वनमालाविभूषित· ।
किरीटहारकेयूरकुण्डलोज्ज्वलविग्रहः ॥
एवंरूपो वासुदेवो भगवानिति शब्दित ।
हृत्पुण्डरीकमध्यस्थं यं ध्यायन्ति मुमुक्षवः ॥

विश्वा.४.५-८

(पृ.71) 19 सत्त्वस्थ. पुरुपो ह्यन्य· शुद्धश्चात्मनि संस्थितः ।

षड्विशः स विज्ञेय· बहिरन्तश्च संस्थितः ।।
द्वादशान्तर्गत· सूक्ष्मो वासुदेव. पर· शिवः ।
सर्वकारणभूतस्तु सर्वशक्तिकलात्मकः ।।
स देव· सर्वग. शान्तः कलात्मा पुरुषोत्तम ।
सर्वव्यापि परो विष्णु· वासुदेवो निरञ्जन ।।

नाग ९ २४-६

(पृ.72) 20 . . . . . . . . . ज्ञानतत्त्वसमन्वितम् ।।
जन्ममृत्युजराव्याधिनाशनं मृत्युतारकम् ।
नानामार्गैश्च दुष्प्रापं कैवल्यं परमं पदम् ।।
अनिर्देश्यमगम्यं यत् सर्वगं सर्वसाक्षिमत् ।
निष्कलं निर्मलं शान्तं सर्वातीतं निरञ्जनम् ।।
परं ब्रह्मेति यत्प्रोक्तं . . . . . . ।

श्रीप्र ३.२d-५a

सर्वाकारं निराकारं शुद्धस्फटिकसंनिभम् ।।
चतुर्भुजं वासुदेवं शङ्खचक्रगदाधरम् ।
आनन्दजलधिं शुद्धं निर्गुणं पीतवाससम् ।।

Ibid ३ ९cd-११

(पृ.122) 191 a ब्रह्मयूपस्वरूपेण त्वाक्रम्य स्वं महामते ।
सौम्यमूर्तिचतुष्कं तु सर्वदिक्प्रसृतं च यत् ।।
प्राच्यां सितेन वपुषा सूर्यकान्त्यधिकेन तु ।
व्यक्तिमभ्येति भगवान् वासुदेवात्मना स्वयम् ।।
पद्मरागसमानेन तेजसा तदनन्तरम् ।
उदेति दक्षिणस्यां वै प्रभुः संकर्षणात्मना ।।
घर्मांशुरश्मिसंतप्तशतधामाधिकेन तु ।
रूपेण पश्चिमस्यां च व्यक्तं प्रद्युम्नसंज्ञया ।।

शरद्गगनसंकाशवर्णेन परमेश्वर. ।
समास्त उत्तरस्या चाप्यनिरुद्धात्मना तत· ॥
सस्थानमादिमूर्तेर्वै सर्वेषा तु समं स्मृतम् ।
सूर्यकोटिप्रभा· सर्वे तेजसा कमलेक्षणा· ॥
दन्तज्योत्स्नावितानैस्तु प्रकटीकृतदिङ्मुखा· ।
पूर्णचन्द्रायुताकारा मुक्ताहाराद्यलंकृताः ॥
लसत्पीयूषसदृशै· स्वाम्बरै स्रग्वरैर्युताः ।
वरायुधोद्यताकारा. स्वकैश्चिह्नैरनुज्झिताः ॥
रेखोत्थितैस्तु कह्लारैः पादपद्मतलाङ्किता· ।
विनम्रजनसंतापशमनव्यापृताननाः ॥
करुणापूर्णहृदया जगदुद्धरणोद्यता· ।
स्वदेहतेज· संभूतज्वालामण्डलमध्यगा· ॥
एवमेवैष भगवान् संपूज्य· प्राक्प्रयोगत. ।
एकैकेन तु भागेन प्राभवेण क्रमेण तु ॥
पुनरेवानिरुद्धादीन् प्राङ्मूर्त्यन्तं महामते ।
क्रमान्निरन्तरैर्भोगैरभ्यर्च्य परमेश्वरम् ॥
प्रणवद्वितयेनैव बुद्ध्या तु सुविशुद्धया ।
अप्ययाख्येन विधिना हृद्यागनिरतैर्बुधैः ॥
अथ भिन्नतनोर्मन्त्रं देवस्यास्य महात्मनः ।
विशाखयूपसंज्ञस्य वक्ष्ये विद्याविवेकदम् ॥

सा ४.७-२०

तृतीयं विभवाख्यं तु रूपमद्य निशामय ॥
तुर्यादि जाग्रदन्तं यत् प्रोक्तं पदचतुष्टयम् ।
वासुदेवादिना व्याप्तमनिरुद्धान्तिमेन तु ॥
तत्र तत्र पदे चैव चातुरात्म्यं तथा तथा ।

अव्यक्तव्यक्तरूपै स्वैरुदितं ते यथोदितम् ॥
व्यूहाद् व्यूहसमुत्पत्तौ पदाद्यावत्पदान्तरम् ।
अन्तरं संकलं देशं संपूरयति तेजसा ॥
पूजितस्तेजसां राशिरव्यक्तो मूर्तिवर्जितः ।
विशाखयूप इत्युक्तस्तत्तज्ज्ञानादिबृंहितः ॥
तस्मिंस्तस्मिन् पदे तस्मान्मूर्तिशाखा चतुष्टयम् ।
वासुदेवादिकं शक्र प्रादुर्भवति वै क्रमात् ॥
एवं स्वप्नपदाज्जाग्रत्पदव्यूहविभावने ।
स्वप्नात्पदाज्जाग्रदन्ते तैजस पूज्यते महान् ॥
विशाखयूपो भगवान् स देवस्तेजसां निधि ।
तुर्याद्ये स्वप्नपर्यन्ते चातुरात्म्यत्रिके हि यत् ॥
तत्तदैश्वर्यसंपन्ने षाड्गुण्यं सुव्यवस्थितम् ।
तदादायाखिलं दिव्यं शुद्धसंवित्पुर·सरम् ॥
विभजन्नात्मनात्मानं वासुदेवादिरूपतः ।
पुनर्विभववेलायां विना मूर्तिचतुष्टयम् ॥
विशाखयूप एवैष विभवान् भावयत्युत ।

लक्ष्मी ११.८cd-१८ab

चतुर्व्यूहचतुष्के स्वे शान्तादिव्यक्तलक्षणे ।
प्राधान्येन त्रयाणा च देवानामवतिष्ठते ॥
यथाम्बरस्थ· सविता त्वेक एव महामते ।
जलाश्रयाणि चाश्रित्य बहुत्वं संप्रदर्शयेत् ॥
एवमेकोऽपि भगवान् नानामन्त्राश्रयेषु च ।
तुर्यादिपदसंस्थेषु बहुत्वमुपयाति च ॥
अनुग्रहार्थं भविनां नानाश्रद्धावशेन तु ।

सा ४ ३२-५ab

# शोधप्रबन्धेऽस्मिन् परामृष्टाः ग्रन्थाः तद्विवरणानि च ।

1. मुद्रितग्रन्थाः


| *ग्रन्थकर्ता* | *ग्रन्थः* | *संस्करणम्* |
|---|---|---|
| | अनिरूद्धसहिता | संपादक.-आसूरि श्रीनिवासय्यगार्<br>मैसूर्, 1956 - देवनागरी |
| | अहिर्बुध्न्यसंहिता | संपादक. - **देवशिखामणि**<br>रामानुजाचार्यः, अडैयार्, 1916-<br>देवनागरी |
| यामुनाचार्य | आगमप्रमाण्यम् | सपादक· - J A B VAN BUITENEN<br>रामानुज रीसर्च सोसइटी. मद्रास्.<br>1971 - देवनागरी |
| | आनन्दसहिता | वैखानसग्रन्थमालान्तर्गता,<br>ईगवारिपालेयम्, 1924 - तेलुगु |
| | ईश्वरसंहिता | संपादक· - प्र. भ अनन्ताचार्य·<br>काञ्चीपुरम्, 1923 - देवनागरी |
| | उपनिषत्संग्रह· | मोतीलाल बनारसीदास, दिल्ली,<br>1970 - देवनागरी |
| | ऋग्वेदसहिता | सं. मोक्षमूलरभट्ट·, कृष्णदास<br>अकेदमी, वाराणसी, 1983 - देवनागरी |
| | कपिञ्जलसहिता | सपादकः- पोडिचेटि<br>सीतारामानुजाचार्य , भद्राचलम्,<br>1931 - तेलुगु |
| | कामिकागम | शिवज्ञानबोधमुद्रणालयः, मद्रास्, ग्रन्थ. |

| *ग्रन्थकर्ता* | *ग्रन्थः* | *संस्करणम्* |
|---|---|---|
| | कुलार्णवतन्त्रम् | स - Sir John Wood Roffe and M. P Pandit, Ganesh & Com Madras) Private Ltd , Madras - 17, 1965 - देवनागरी |
| | कौटिलीयार्थशास्त्रम् | सं. एन् एस् वेकटनाथाचार्य. Oriental Research Institute University of Mysore 1965 - देवनागरी |
| | छान्दोग्योपनिषत् | गीताप्रेस्, गोरखपूर्, स. २०१९ देवनागरी |
| | जयाख्यसंहिता | संपादक - एम्बार्, कृष्णमाचार्य बडौदा, 1967 - देवनागरी |
| | श्रीमद्रहस्यत्रयसार. | संपादक -तूप्पलवेंकटाचार्य बेगलूर्- तेलुगु |
| कुमारिलभट्ट | तन्त्रवार्तिकम् | मीमांसादर्शनम् - सतन्त्रवार्तिक - शाबरभाष्य सहितम् आनन्दाश्रम- ग्रन्थावलि ग्रन्थाङ्क ९७ पूना - देवनागरी |
| | तन्त्रसग्रह | संपादक - म.म. श्री गोपीनाथकवि - राजमहोदय , वाराणसी - 1970 - देवनागरी |
| म.म.लक्ष्मीपुरं श्रीनिवासाचार्यः | दर्शनोदय. | Govt Press, Mysore-1933-देवनागरी |
| श्रीनिवासमखि- वेदान्तदेशिक | दशविधहेतु- निरूपणम् | संपादक· डि. रङ्गाचार्य ईगावारिपालेयम्. 1931, तेलुगु |
| | नारदपञ्चरात्रम् (ज्ञानामृतसार )- | वेकटेश्वरमुद्रणालय , बम्बई-देवनागरी |

| *ग्रन्थकर्ता* | *ग्रन्थः* | *संस्करणम्* |
| --- | --- | --- |
| | नारदीयसंहिता | सपादक - राघवप्रसाद चौधरी, तिरुपति, 1971 - देवनागरी |
| | निरुक्तम् | मेहर्चन्दलक्ष्मणदास पब्लिषर्स्, नवदेहली, 1985, देवनागरी |
| उदयनाचार्य | न्यायकुसुमाञ्जलि | श्रीमदण्णयार्यमहादेशिकविद्वत्सभा, नावल्पाक्कम्, वन्दवासि, तमिलनाडु 1979, देवनागरी |
| वेदान्तदेशिक | न्यायपरिशुद्धि | विशिष्टाद्वैतप्रवचनसभा, तिरुवहीन्द्रपुरम्, 1913 - देवनागरी |
| वात्स्यायन· | न्यायभाष्यम् | चौखाम्बा संस्कृत सीरीस्, बनारस्, 1925 - देवनागरी |
| जयन्तभट्ट | न्यायमञ्जरी | चौखाम्बा सस्कृतसीरीस्, वाराणसी, 1971 - देवनागरी |
| | परमसंहिता | सपादक· - डा. एस् कृष्णस्वामि अय्यंगार्, बडौदा, 1940 - देवनागरी |
| वेदान्तदेशिक | पाञ्चरात्ररक्षा | अडैयार्, 1967, देवनागरी |
| वाचस्पतिमिश्र | पातञ्जलयोग-दर्शनव्याख्या तत्त्वप्रदीपिकासञ्ज्ञिका | भारतीय विद्याप्रकाशन्, वाराणसी, देवनागरी |
| | पाद्मसंहिता (चर्यापाद ) | संपादक - गोमठं रामानुज - ज्योतिषिक·, बेङ्गलूर्-1965-तेलुगु |
| | पाद्मसंहिता (ज्ञानपाद ) | सपादक. - यतिराजसंपत्कुमार-रामानुजमुनि - बेंङ्गलूर् - 1927, तेलुगु |

| *ग्रन्थकर्ता* | *ग्रन्थः* | *संस्करणम्* |
|---|---|---|
| | पारमेश्वरसंहिता | सपादक - गोविन्दाचार्य श्रीरङ्गम्, 1953 - देवनागरी |
| | पुरुषोत्तमसंहिता | संपादक. - पोडिचेटि सीतारामानुजायार्यः, भद्राचलम्, 1932 - तेलुगु |
| | पौष्करसंहिता | संपादक· - संपत्कुमाररामानुजमुनिः, बेङ्गलूर्, 1934 - देवनागरी |
| | बोधायनगृह्यसूत्रम् | संपादकः - आर् शामाशास्त्री, नवदेहली - 1982 - देवनागरी |
| | ब्रह्मसूत्रशाङ्करभाष्यम् | संपादक· - पं. अनन्तकृष्णशास्त्री, वाराणसी, 1982, देवनागरी. |
| पं. बलदेव-उपाध्याय· | भागवतसप्रदाय | नागरीप्रचारिणीसभा, काशी, वि.सं. - २०१० - देवनागरी |
| डा.एस्.एन्.-दासगुप्ता | भारतीय दर्शन का इतिहास | राजस्थान हिन्दी ग्रन्थ अकेदमी, जयपूर्, 1974, देवनागरी, |
| | महाभारतम् | सपादकः - श्रीपादकृष्णबेल्वलकर् भण्डार्कर् ओरियण्टल रीसर्च इन्स्टिट्यूट्, पूना, 1954 - देवनागरी |
| | महाभाष्यम् | मोतीलाल बनारसीदास, वाराणसी 1967 - देवनागरी |
| | यज्ञाधिकार | संपादक. - डि रङ्गाचार्य., ईगावारिपालेयम्, 1933, तेलुगु |
| | लक्ष्मीतन्त्रम् | संपादकः - प. वि. कृष्णमाचार्यः, अडैयार्, 1959, देवनागरी |

| *ग्रन्थकर्ता* | *ग्रन्थः* | *संस्करणम्* |
|---|---|---|
| | विमानार्चनाकल्प· | संपादकौ - रघुनाथचक्रवर्ति भट्टाचार्य-सेतुमाधवाचार्यौ, चेन्नपुरी, 1926, देवनागरी |
| | विश्वामित्रसहिता | संपादक - प्रो. उ. शंकरभट्टः, तिरुपतिः, 1970 - देवनागरी |
| प्रो.उ शकरभट्ट | विश्वामित्रसंहिताया तुलनात्मकमध्ययनम् | तिरुपति 1988 - देवनागरी |
| | विष्णुतिलकम् | सपादक - को. ई. राघवाचार्य बेङ्गलूरु, 1896 - तेलुगु |
| | विष्णुपुराणम् | गीताप्रेस्, गोरखपूरु, 1969,देवनागरी |
| | विष्णुसंहिता | संपादक - टि गणपतिशास्त्री, त्रिवेन्द्रम्, 1925, देवनागरी |
| | विष्वक्सेनसंहिता | संपादक. - लक्ष्मीनरसिंहभट्टः, तिरुपति , 1972 - देवनागरी |
| | वैखानसगृह्यसूत्रम् | संपादक - आर्. पार्थसारथि - भट्टाचार्य , तिरुपति 1967 - देवनागरी |
| आर् जि.भण्डारकर | वैष्णव शैव और अन्य धार्मिक मत | भारतीय विद्याप्रकाशन, वाराणसी, 1967 - देवनागरी |
| स्यारा-राजा-राधाकान्त-देवबहादुर | शब्दकल्पद्रुम | मोतीलाल बनारसीदास्,दिल्ली,1961- देवनागरी |
| | श्रीप्रश्नसंहिता | सं - सीतापद्मनाभन् केन्द्रीयसस्कृतविद्यापीठम्, तिरुपतिः 1969 - देवनागरी |

| ग्रन्थकर्ता | ग्रन्थः | संस्करणम् |
|---|---|---|
| | श्रीमद्भगवद्गीता | गीताप्रेस्, गोरखपुर् स २००8 - देवनागरी |
| | श्रीमद्रामायणम् | एम्. एल्. जे. प्रेस्. मद्रास् - 1958- देवनागरी |
| | श्रीविष्णोर्नामसहस्रम् (भाष्यत्रयोपेतम्) | मुम्बई, संवत्. १९५० - देवनागरी |
| | श्रुतप्रकाशिकासहित श्रीभाष्यम् | विशिष्टाद्वैतप्रचारिणीसभा मद्रास् 1989 - देवनागरी |
| कुमारिलभट्ट | श्लोकवार्तिकम् | चौखाम्बा, बनारस् - १, देवनागरी |
| | समूर्तार्चनाधिकरणम् | सपादकौ- पि रघुनाथचक्रवर्ति-भट्टाचार्य - एम्. रामकृष्णकविमहोदयौ, तिरुपति. 1943, देवनागरी |
| ईश्वरकृष्णः | साख्यकारिका | चौखाम्बा ओरिण्टल सीरीस्, वाराणसी 1976 - देवनागरी |
| | सात्त्वतसंहिता | सपादक - व्रजवल्लभद्विवेदी, वाराणसी-1982 - देवनागरी |
| | हयशीर्ष पञ्चरात्रम्-आदिकाण्डः | संपादकः - भुवनमोहनसांख्यतीर्थ., राजशाही, 1952 - देवनागरी |

## 2. हस्तलिखितग्रन्थाः

| | | |
|---|---|---|
| | भारद्वाजसंहिताः - | T S Paper-Gr Inc / Srivaikuntham |
| | मार्कण्डेयसंहिता | T S KSV 543, Paper - DN, Tel - Inc, |
| | | T S 1817, paper-DN-Inc/SVORI, Tirupati |
| | वासाधिकार | T S Paper - Tel - Com/Tiruapati |

| ग्रन्थकर्ता | ग्रन्थः | संस्करणम् |
|---|---|---|
| | विष्णुतन्त्रम् | T S TR 577 Paper - DN - Inc. Adyar, |
| | विहगेन्द्रसहिता | T S KSV 513 Paper - Tel |

## 3. परिशीलिताः शोधलेखाः ग्रन्थाश्च


1 P P Apte, — Pāñcarātra Name And Ongın, CASS studıes, Number 2,

2 S R. Bhat, — The Phılosophy of Pāñcarātra, Madras, 1968

3 V Raghavan — 'The Name Pāñcarātra with an analysıs of the Sanathkumara Samhıta ın Manuscnpt' Journ Am Or Soc Vol 85 No. 1 [January - March 1965] 73-9

4. F otto Schrader, — Introductıon to Pāñcarātra and the Ahırbudhnya Samhıta, Adyar 1916

5 M Denıal Smıth, — A Descnptıve Bıblıography of the Pnnted Texts of The Pāñcarātrāgama Vol I, Onental Instıtute, Baroda 1975

6. डा. राघव प्रसाद चौधरी, — 'वैखानसागमसाहित्यस्य सूचिक्रम.' विमर्श. 1.1. केन्द्रीयसंस्कृत-विद्यापीठम्, तिरुपति 1972,7-16.

7. प्रो. एन्. एस्. रामानुजताताचार्यः, — 'मूर्तिपूजा वैखानसागमश्च' Samskrıta Academy Dıamond Jubılee Commemoratıon Vol Madras, 1990


※ ※ ※